LVII (1-4) January-December 2001



# JOURNAL OF THE GANGANATHA JHA KENDRIYA SANSKRITA VIDYAPEETHA

EDITOR
**GOPARAJU RAMA**




Ganganatha Jha Kendriya Sanskrit Vidyapeetha
Chandrashekhar Azad Park
Allahabad
2004

Ganganatha Jha Kendriya Sanskrit Vidyapeetha is a constituent Institute of *Rashtriya Sanskrit Sansthan,* Delhi, which is run under the auspices of the Ministry of Human Resources Developments. Govt. of India.

•

गङ्गानाथप्रसृमरयशश्चन्द्रिकाधौतहर्म्यं
कूजद्विद्वद्विहगनिवहानेकगीताभिरामम्।
काले काले कुसुमितनवान्वेषणाऽऽमोदिताशं
विद्यापीठं जयतु जगतां भूयसे मङ्गलाय॥

•

*Annual Subscription*
*Indian : Rs. 80/- Foreign : $ 20/-*
*(including postage and registration charges)*

*Printed at :*
Prayagraj Computers
56/13 Motilal Nehru Road, Allahabad-2

# Foreword

The nomenclature of our Vidyapeetha has changed ever since the Rashtriya Sanskrit Samsthan, New Delhi was elevated to the status of Deemed University in 2002. Now the present name of our Vidyapeetha with its enchanced प्रवर is as follows :

Rashtriya Sanskrit Samsthan

(Deemed University)

Ganganatha Jha Campus,

Azad Park, Allahabad-2

As usual the present issue of our Journal carries the articles, reputed as well as reknowned one. A few articles are bulky in nature but the charecteristic of the subject resulted in making them lengthy. Some articles poured in at the time of its press stage. Among them few are accomodated. All articles bear some kind of innovation. Some may appear informative only but in depth they too are to the mark.

We express our sincere thanks to the scholars who have cooperated in bringing out this issue of the Journal.

**Goparaju Rama**

JOURNAL
OF THE
GANGANATHA JHA
KENDRIYA SANSKRIT VIDYAPEETHA

**Vol. LVII (1-4)** **January–December 2001**

# CONTENTS

------

# मीमांसासम्मतं ज्ञानस्वरूपम्

डा० ए० रामुलु, हैदराबाद

शब्दज्योतिषा रहितं भुवनत्रयमन्धतम एव जायेत इत्याह शब्दविद्यविदाचार्यो दण्डी[1]। परं शब्दव्यवहारप्रर्तकं, किमधिकं सकलं मानवजीवनमेवाभिव्याप्य वर्तमानं ज्ञानमेव यदि नाभविष्यत्तदा का दशा भुवनत्रयस्य अभविष्यदिति न कोपि वक्तुं पारयेत–तस्मात् सिद्धं सर्वातिशायि महत्वं ज्ञानस्य।

तदिदं ज्ञानमीदृगिति निर्दिश्य कथयितुं न प्रभवामः। यथा खलु चक्षुष्मान् लोकः कोऽयमालोक इति न कदाचिदपि सन्देग्धि तथैव व्यवहारे प्रवृत्तः पुरुषः सार्वजनीनानुभवसिद्धं ज्ञानं कीदृगिति न संशेते। अथापि विषय एष विचारणीयो यत् किमिदं ज्ञानं नाम? कथमुत्पद्यतें? कथञ्चानुभूयते? इति।

तत्र विषयावभासकस्य ज्ञानस्य बाह्यान्तरभेदेन द्वैविध्यं सर्वसम्मतम्। इन्द्रियादिबाह्यसाधनापेक्षस्य ज्ञानस्य बाह्यत्वम, अन्तःकरणमनोजन्यस्य पुनरान्तरत्वमिति विवेकः।

आत्मना मनसा इन्द्रियेण अर्थेन च संबद्धं हि ज्ञानमुत्पद्यते[2]। एतेषु प्रथममात्मना सह ज्ञानस्य कः संबन्ध इति विचार्यते, तदनन्तरं च इन्द्रियादीनां विचारः प्रस्तूयते। यतो हि विविधशास्त्रकाराणां ज्ञानात्मनोंः सम्बन्धस्य परिकल्पनां आधारतयोपकल्प्य ज्ञानस्वरूपं सूपपादम्।

तत्र जीवजडात्मके प्रपञ्चे जीव एव हि चेतन इत्युच्यते। तस्य च चैतन्यं किं रूपमित्यत्र वर्तते विदुषां विमतिः। मीमांसकमते ज्ञानं क्रियाविशेष एव। मीमांसकाश्च प्रभकरानुयायिनः

---

1. इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्। यदिशब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥ काव्यादर्श 1.1
2. आत्मा मनसा संयुज्यते। मन इन्द्रियेण। इन्द्रियमर्थेन। ततः प्रत्यक्षम्। वात्स्यायनभाष्यम्–3–2–28 पृ० 568

कुमारिलभट्टानुयायिनश्चेति द्वेधा प्रसिद्धः तेषु भाट्टा एव सिद्धान्तत्वेन तत्र तत्र मानमेयादि-ग्रन्थेषु निर्दिष्टाः समुपलभ्यन्ते। प्राभाकरादयस्तु मीमांसकैकदेशित्वेनोल्लिख्यमानाः गौणत्वमेव वहन्तीति सुविदितम्।

वस्तुतः मीमांसा त्रिवेणीसंगमस्थानम्। भाट्टमीमांसा शाखा गङ्गेव राराजते। प्राभाकरमीमांसाशाखा यमुनेव विराजते। 'मुरारेः तृतीयः पन्थाः' इति ख्यातिमाप्ता मुरारिमीमांसाशाखा सरस्वतीव अन्तर्वाहिनी दृश्यते।

तत्र भाट्टानां मते ज्ञानमात्मनिष्ठः, क्रियाविशेषः। सच फलहेतुक अनुमानैकगम्यः3[1]। 'घटमहं जानामि' इत्यादौ घटादीनां कर्मतया, अहंपद वाच्यस्यात्मनश्च कर्तृतया धात्वर्थान्वयित्वात्[2], ज्ञानस्य क्रियारूपत्वमुपपद्यते। न च क्रिया नाम शारीरो व्यापार इति वाच्यम्। धात्वर्थस्यैव क्रियात्वात्। तथा चोक्तं काशिकायाम् :- 'अस्ति कश्चिदात्मसमवायी ज्ञानसंवेदनादि पदपर्यायवाच्यो जानाति धातूपादानः क्रियाभेदो यस्मिन्नर्थानां प्रप्तिकर्मता'[3] इति। 'बुध्यते' इत्यादिशब्देभ्यश्च क्रियाप्रत्यय एवोपजायमानो दृश्यते। तस्मात्सिद्धं ज्ञानस्यात्मकर्तृकक्रियारूपत्वम्।

## भाट्टमतम् :-

भाट्टमतानुयायिषु केचन चिदानन्द, नारायाण प्रभृतयः ज्ञानस्य आत्मगुणत्वमेवाभिप्रयन्तः बुद्धिं गुणेष्वन्यतमां परिकल्पयन्ति[4]।

स्वयं कुमारिलभट्टोऽपि ज्ञानस्य आत्मधर्मत्वमस्पष्टमुररीचकारेति प्रवादः अस्ति[5]।

---

1. नहि अज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते ज्ञातेत्वनुमानादवगच्छाति। शाबरभाष्ये 1-1-11
नान्यथा ह्यर्थसद्भवो दृष्टः सन्नुपपद्यते। ज्ञानं चेन्नेत्यतः पश्चात्प्रमाणमुपकल्प्यते। श्लोकवार्तिक पृ० 278
2. श्लोकवार्तिक-आत्मप्रकरणे 74-75
3. काशिका-द्वितीयो भागः पृ० 123 (त्रिवेण्ड्रम् संस्करणम्)
4. बुद्धि-सुख-दुःखेच्छा-द्वेषप्रयत्ना आत्मविशेषगुणाः। नारायणस्य मानमेयोदये पृ० 252; चिदानन्दस्य नीतितत्वाविर्भावे -पृ० 212
5. श्लोकवार्तिके-निरालाम्बनवादे-47

पार्थसारथिमिश्रास्तु शास्त्रदीपिकायां[1] **'ज्ञानक्रिया हि सकर्मिका'** इत्यादिग्रन्थेन ज्ञानस्य क्रियारूपतां साग्रहं प्रतिपाद्य, उत्तरत्र आत्मनो नौव विशेषधर्मान्निरूपयन्तो ज्ञानमपि तदन्यतमत्वेन परिगणयन्ति।

## प्रभाकरमतम्:-

प्राभाकरास्तु सर्वासां क्रियाणामतीन्द्रियत्वेनानुमानगम्यत्वात्. ज्ञानमप्यनुमानगम्यमेवेति कथयन्ति। परं ज्ञानपदेन ते आत्ममनःसंयोगमभिप्रयन्ति। वस्तुतत्वाविष्कारकं सर्वसम्मतं ज्ञानस्वरूपं तु संविदित्युच्यते तैः। सा तु आत्मनो गुण एव। प्राभाकरमते संवित् स्वप्रकाशा[2]।

## निष्कर्षः-

इदमत्रावधेयम्—भाट्टेषु प्रागुपदर्शितदिशा केचन ज्ञानमात्मगुणत्वेन, अपरे पुनः आत्मकर्तृकक्रियात्वेन परिगणयन्ति। ततश्च कुमारिलाभिमतं वास्तविकं ज्ञानस्वरूपं किमिति विचारे सनिश्चयमिदमवधारयामो यद् ज्ञानपदेन ज्ञानशक्तिरेवाभिमता भाट्टानामिति। सत्यां हि शक्तौ विषयग्रहणादिरूपा आत्मनिष्ठा क्रिया उत्पद्यते। तथा च भाट्टमते ज्ञातृत्वं नाम आत्मनो धर्मविशेषः, येन विना तस्य चैतन्यमेव व्याहन्येत। ज्ञानञ्च विषयसापेक्षत्वात्, आगमापायित्वाच्च अनित्यम्। सति चैवं मुक्तावस्थायां, सुषुप्त्यवस्थायां वा विषयेन्द्रियसम्बन्धाभावात् ज्ञानरहितस्य तस्य कथं ज्ञातृत्वं चैतन्यं वा उपपद्येत इति तु शंक्यम्। भाट्टनये तदानीं विषयनिवृत्तेः इन्द्रियोपरमाद्वा विषयान् ज्ञातुमकामयन् ज्ञानशक्तिस्वभावाऽयमात्मा ज्ञानरहिता भवति न पुनः ज्ञानशक्तिरहितः[3]।

पार्थिसारथिमिश्राणामाशयः पुनरेवं यत् सुषुप्तौ सत्यामपि ज्ञानशक्तौ इन्द्रियादि ज्ञानकरणवैकल्यात् आत्मा न विषयान् ज्ञातुं प्रभवति। तथैव मुक्तावस्थायां मनसा सह वियोगमासाद्य चक्षुरादिसाधनविलयाच्च आत्मा न बाह्यविषयान् नाप्यात्मानं ज्ञातुं प्रभवति। एवञ्च ज्ञानशक्तिस्वभावोऽप्यात्मा मुक्तावस्थायां मनः संबन्धाभावात् न ज्ञानं नाप्यानन्द

---

1. शास्त्रदीपिकायां पृ० 56
2. प्रकरणपञ्चिका (शालिकनाथ विरचिता)–पृ० 149
3. श्लोकवार्तिके–आत्मवादे पृ० 26

मनुभवतीति[1] तन्न कुमारिलभट्टमतमनुसरति[2]। यतो हि ज्ञानशक्तिस्वभाव इति पदेन आत्मा सत्यामावश्यकतायां ज्ञातुं प्रभवत्येवेत्यमुमभिप्रायमाविष्करोति कुमारिलभट्टः।

## सुचरितमिश्राणामाशयः :-

सुचरितमिश्रास्तु भाट्टमतमन्यविधया परिश्चक्रुः। तदनुसारं ज्ञानं नाम स्वभाव एवात्मनः। चितिशक्तिरात्मना नित्यसंबद्धा बाह्यार्थसंसर्गाभावे विषयान्तराभावादात्मानमेव विषयीकरोति। मुक्तावस्थायामपि ज्ञानसाधनं मनः न निवर्तते। परं बाह्येन्द्रियाभावात् बाह्यपदार्थविषयीकरणाक्षमं स्वसम्बद्धमात्मानमेव विषयीकरोति। एवं रीत्या ज्ञानं नाम आत्मामनःसंयोगजन्यो नित्यो धर्म विशेष इति[3]।

## विषयसारांशः भट्टमते-

वस्तुवस्तु भाट्टमते ज्ञानं क्रियैव, परं तदपेक्षया तदनुकूलाया आत्मनिष्ठशक्तेः प्राधान्यं मनसि निधाय भाट्टसंप्रदायिनः क्वचित्क्रियात्वं क्वचिद्गुणत्वं ज्ञानस्योपवर्णयन्ति।

मीमांसाकेषु सुचरितमिश्रादयो शक्तेरतिरिक्तपदार्थत्वं स्वीकुर्वन्ति। मानमेयोदयकारादयस्तु गुणत्वमङ्गीकुर्वन्ति। गुणत्ववादी मानमेयोदयकारः– 'शक्तेर्गुणत्वस्वीकारपक्षो लाघवात्-ज्यायान्' इत्युपवर्ण्य 'शक्तेः पदार्थान्तरत्वमपि कौमारिलानामिष्टमेव[4]' इति स्वसम्मतिं सूचयति। तदेवं भाट्टमते ज्ञानपदेन ज्ञानशक्तिरभिप्रेतेति आधुनिकविमर्शकाः[5]।

## प्राभाकरमते :-

त्रिपुरीप्रत्यक्षवादिनस्तु प्राभाकराः मिति-मातृ-मेयविषयकमेव संविद्रूपं ज्ञानं सर्वदा उत्पद्यत इति केवलमात्मविषयकं ज्ञानं न सम्भवति। मुक्तावस्थायामात्मनः वाह्येन्दियमनोभिः सम्बन्धाभावात् बाह्यपदार्थविषयकं ज्ञानं नोत्पद्यते नापि स्वविषयकम्। ततश्च सत्तामात्रं मुक्तात्मनः सिद्ध्यतीति प्रतिपादयन्ति। ❑

---

1. शास्त्रदीपिका -पृ० 128-130
2. Epistomology of Bhatta School of Purva Mimansa by Govardhan Bhatt II P-10
3. श्लोकवार्तिके-शून्यवादे-काशिकायां-70
4. मानमेयोदय-गुणनिरूपणम्-पृ० 29
5. Epistomology of Bhatta School of Purva Mimansa by Govardhan Bhatt II P-21

# वैदिकसंहितासु भगवतः श्रीकृष्णस्य चरित्रम्

**डा० रूपनारायण पाण्डेयः, इलाहाबाद**

विलसतितरां श्रीमद्भागवते भगवतः श्रीकृष्णस्य दिव्यं चरित्रम्। पुराणान्तरेषु, महाभारते तदाश्रित्य च प्रणीतेषु काव्यग्रन्थेषु देवकीसुतस्य वासुदेवस्य विविधा लीलाः वर्णिताः सन्ति। कासुचिद् उपनिषत्सु श्रीकृष्णस्य महिमा वर्ण्यते। वैदिकसंहितासु पौराणिकस्य श्रीकृष्णस्य नामापि न विद्यते। एवं केचन विद्वांसो मन्यन्ते, किन्तु कथनमेतत् सर्वथा तथ्योपेतं न विद्यते।

महाभारतस्य टीकाकारेण पदवाक्यप्रमाणमर्यादाधुरन्धरेण-चतुर्धरवंशावतंसेन श्रीमता नीलकण्ठेन मन्त्ररामायणं मन्त्रभागवतं च प्रणीय रामकृष्णयोश्चरितस्य वैदिकता प्रामाण्य-मुपनीता। स्विष्टीये विंशतितमें शतके स्वामी हरिहरानन्दसरस्वती (करपात्रीति लोके विश्रुतः) शुक्लयजुर्वेदस्य करपात्रभाष्ये बहूनां वेदमन्त्राणां भाष्यं रामकृष्णचरितपरकं व्याख्यातवान्। अत्र मन्त्रभागवतं करपात्रभाष्यञ्चावलम्ब्य केषाञ्चिन्मन्त्राणां कृष्णपरकं व्याख्यानं प्रस्तूयते।

**आकृष्णेन रजसावर्तमानो निवेशयन्नमृतं मर्त्यं च।**

**हिरणमयेन सविता रथेनादेवो याति भुवनानि पश्यन्॥**

(ऋ० 1/35/2)

भाष्यकारो नीलकण्ठोऽत्र श्रीकृष्णस्य परमेश्वरत्वं प्रतिपादयति। 'श्रीकृष्णेन कृष्णशब्दितेन, रजसा रञ्जकेन, एष ह्येवानन्दं याति' इति श्रुतिप्रसिद्धेन सत्ताहेतुना, आवार्त्तमानः सविता देवो यातीति वदन्त्या श्रुत्या को ह्येवान्यत् कः प्राप्यादरोष आकाश आनन्दो न स्यादिति श्रुत्यन्तरप्रसिद्धं सवित्रादीनां तु चालकं कृष्णरजः ततो पृथगिति दर्शितम्। न च कृष्णेनेति रथेनेत्यस्य विशेषणं सम्भवति व्यवहितत्वात्, कृष्णं भा इत्युदाहृतं श्रुत्यन्तर-विरोधाच्च सौर्यत्वमृचोर्दिवाकीर्त्यत्वादौपचारिकं लिंगादर्शनात्। शेषं स्पष्टार्थम्।

(मन्त्रभागवतम् 1/6 , मन्त्ररहस्य प्रकाशिका) अत्र 'रजसा' इति पदस्य 'रञ्जकेन' इत्यर्थः सर्वथा निरूक्तसम्मतं व्याकरणसंगतं च। 'रजो रजतेज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्युच्यन्ते। असृगहनी रजसी उच्येते।' (नि० 4/3/19) 'ज्योतिर्ह्यनुरञ्जयति द्रव्याणि स्वप्रकाशेन।' (निरुक्तवृत्तिः, तत्रैव)

**'अयं रोचयदरुचो रुचानोऽयं वासयद् व्यृतेन पूर्वीः।**

**अयमीयत ऋतयुग्भिरश्वैः स्वर्विदा नासिना चर्षणिप्राः॥'**

(ऋ 6/39/4)

अत्र चौर्येण गव्यं भक्षयन्तं कृष्णं निगृह्य, मातुर्यशोदायाश्च निकटम् आनीय कथयति गोपीजनः।' अयं तव पुत्रः, अरुचः अप्रकाशमानान्, गोप्यस्थानेऽपि स्थापतिान् क्षीरादीन् रसान्, रोचयत् भोक्तुं रोचयते। पुरश्च रुचानः स्तेनोऽप्यस्तेनवद् दीव्यमानो धृष्टत्वं करोतीत्यर्थः। अयम् उपालभ्यमानः पूर्वीः स्वापेक्षया अतिप्रौढ़ा अपि, विवासयत् विवसनाः करोति, एवं व्याकुलीकृत्य पलायत इत्यर्थः। ऋतेन शपथेनैतद् वदामो न तु द्वेषेण। तर्हिबह्वीभिर्मिलित्वा कुतोऽयं न घ्रियते, अत आहुः। अयम् ऋतयुग्भिः कर्मवद्भिर्वेगवद्भिरिति यावत्, अश्वैरीयते-लभ्यते, वेगवतोऽश्वाप्यधिकं

धावतीत्यर्थः कीदृशोऽयं? स्वर्विदा स्वः भक्षणसुखं विन्दतीति स्वर्वित्, तेन सुखमात्रार्थिना, नाभिना नाभिस्थजाठरेण निमित्तेन चर्षणिप्राः—चर्षणीः प्रजाः प्लायति लङ्घयतीति चर्षणिप्रा, रलयोः सावर्ण्यात् प्राः मिष्टार्थी भयं लोकमर्यादां लङ्घयतीत्यर्थः। वस्तुतः त्वयमासामभिप्रायः। अयं चिदात्मा स्वयं रुचानः प्रकाशमानः अरुचः अरोचमानान् जडान् घटादीन् रोचयत् प्रकाशयति् तस्य भासा सर्वमिदं विभातीति श्रुत्यन्तरात्- अयमेव विशेषण पूर्वीः प्रजाः अब्दक्ताद्याः स्वयमनृताः सत्यः स्वेन ऋतेन सत्वेन वासयति। अयमेव जडानृतस्य प्रपज्चस्य स्फूर्तिसत्ताप्रद इत्यर्थः। अयम् ऋतयुम्भिः सत्येन वस्तुना सम्बद्धै रिन्द्रियाश्वैः अन्तर्मुखैरिन्द्रियैर्मनोमात्रतां गतैः ईयते गम्यते। स्वर्विदा नाभिना सगुणब्रह्मोपलब्धिस्थानेन नाभिना आलम्बनीकृतेन ईयते, नाम्यामुपरि तिष्ठति विश्वस्यायतनं महदिति श्रुतेः चर्षणिप्राः प्रजापूरको व्यापक इत्यर्थः' । (म० 1/26)

**'दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।**

**अपां बिलमपिहितं यदासीद् वृत्रं जधन्वाँ अप तद्ववार॥**

(ऋ० 1/321/11)

अस्मिन् मन्त्रे कालियनागस्य दमनमुपवर्ण्यते। 'दस्यन्ति उपक्षीयन्ते लोका अनेनेति दासो हिस्त्रः तस्य पत्नीरिव पत्नीः तत्सहधर्मचारीणीर्हिंस्त्राः विषदूषिताः आपः अतिष्ठन्=आसन्। यतः अहिः कालियाख्यः सर्पः, गोपायतीति गोपा स्वामी यासां ता अहिगोपाः अतएव निरुद्धाः, इतरा भोज्याः पणिना=चोरवृन्देन, गाव इव निरुद्धाः अपां मध्ये बिलम्- अहिगृहस्य द्वारं यदपिहितम्=अद्भिरेवाच्छादितम् आसीत् तत् वृत्रं जघन्वान्=शत्रुं जिगमिषुः, हन्तिरत्र गत्यर्थः, अपववार-अपावृणोत् उद्घाटितवान्। तीरस्थ तरुमारुह्य अत्युच्चात् स्थानात् यमुनायां निपत्य कालियमभ्यभूदित्यर्थः।' (म० 2/7)

**'आग्रावभिरहन्येभिरक्तुभिर्वरिष्ठं वज्रमा जिघर्तिमायिनि।**

**शतं वा यस्य प्रचरन् स्वे दमे संवर्तयन्तो वि च वर्तयन्नहा॥'**

अस्मिन् मन्त्रे गोवर्धनोद्धारकोऽभिधीयते (ऋ० 5/48/3) 'यस्य इन्द्रस्य, स्वे दमे-स्वकीये गृहे, शतम्-शतसंख्याः वा शताधिका वा, संवर्तयन्तः-संवर्न्त प्रलयं कुर्वन्तः सांवर्त्तका नाम मेघगणाः, प्रचरन्-दासवच्चरन्ति। स इन्द्रः ग्रावभिरिति ग्रावसमुदायरूपः पर्वतो लक्ष्यते तेन, अहन्येभिः अहः क्रतुं, अर्हद्भिः, ऐन्द्र महमुत्सादध पर्वतमहे प्रवर्तिते सतीत्यर्थः वरिष्ठम्-उरुतमम्, वज्रं वज्रपारं वर्षे, मायिनि-मायामृगीनर्त्तके कृष्णे, अक्तुभिः-पुराणतः सप्तभी रात्रिमिः परिमितेन कालेन, आजिधर्त्ति-सर्वतः क्षरन्ति। सप्तारात्रपर्यन्तं गोकुलोपरि कल्पान्तवर्षसमं वर्षं चकारेत्यर्थः मायी तु अहा= अहानि, क्रतून् विवर्तयन्=विपरीतं कुर्वन् एवाऽऽस्ते इति शेषः। तस्माद् वर्षान्न भयं चकारेति भावः' (म० 2/15)

**'अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात्।**

**सा कद्रीची कं स्विदर्थं परागात्कस्वित् सूते न हि यूथे अन्तः॥**

**(ऋ० 1/164/17)**

अत्र गोपीभिः सह कृष्णस्य रासक्रीडायाः रहस्यं विशदीक्रियते। 'परेण=यदा निवृत्तिरूपेणालम्बनेन, अवः=अवरम् वत्सम्=धर्मम्, बिभ्रती=प्रकाशयन्ती, तथावरणेन=प्रवृत्तिरूपेण, पदा परः=परमं धर्मं प्रकाशयन्ती, गौः वाणी, एना-एतान्याख्यानानि उदस्थात् उत्क्रम्य स्थितवती, न हि वेदे आख्यायिकाः प्रतिपाद्यन्ते,. अपितु तद् द्वारेण परापररूपो धर्म एवेत्यर्थः सा=प्रवृत्तिनिवृतिरूपा वाक् कद्रीची=केन सह अञ्चति, प्राकाशते। कमर्थवाच्या वृत्याभिधत्ते। कं स्विदर्धम्=किं वा स्थानम्, परागात्=दूरे गच्छति। किं तात्पर्योण प्रतिपादयति।

क्व स्वित्सूते=कस्मिन्नधिकारिणि सूते, प्रवृत्तिनिवृत्तिरूपं फलंजनयति? एतत् सर्व दुर्ज्ञेयमित्यर्थ:। हि=यत: इयं यूथेऽन्तर्न यौति मिश्रीभवति, पृथक् भवत्यनात्या, अवान्तर-वाक्यानि वात्रेति....प्रवृत्तिमुखेन परमो धर्मस्तु आख्याभिकाभ्य एव उन्नेय:। पूर्वमन्त्रोक्तदिशा चित् कृष्णो वृत्तं गोपीषु विद्यां नितरां जहौ। तां च त्यकृत्वैक्यतृप्त: संस्ताभ्योऽदाद् रतिजीविते इति रासक्रीडातात्पर्यम् (म० 2/37)

**'सप्त मे सप्त शाकिन एकमेका शता ददु:।**

**यमुनायामधि श्रुतमुद्राधौ गव्यं मृजे नि राधो अख्यं मृजे॥**

**( ऋ० 5/52/16 )**

अक्रूरो रामकृष्णावादाय मथुरां याति। मार्गे स्नानकाले स ददर्श यमुनायां भगवन्तम्।' सप्त सप्त=संख्या: एकोनपञ्चाशन् मरूत: प्राणायामदेवता: अधमर्षण काले प्रसन्ना: सन्त:, एकमेका=एकमेकम् 'सुपोऽदेश:' प्रत्येकमित्यर्थ:। शता=शतानि ऐश्वर्याणि, ददु:=दत्तबन्त:, 'शतमैश्वर्यं भवतीति यास्क:। यत: अधिश्रुतम्=सर्वापेक्षया उपरिश्रुतम=वेदादाकलितम् राधोवित्तम् 'एषास्य परमासम्पदित्युपनिषत्प्रसिद्धं भूभसंज्ञं ब्रह्मलोके च रामकृष्णवेषं यमुनायां मृजे=मार्गयामि=पश्यामीत्यर्थ:। तदेव राध: उत्=ऊर्ध्वम् आकाशे गव्यम्=गोषु सूर्यरश्मिषु स्थितं सूर्यमण्डलेऽपीत्यर्थ:। तत्रापि सूर्योपस्थानकाले मृजे, तदेव च राध: अख्यम्= अश्वबाह्ये रथे स्थितं नि=निहीने भूस्थानेऽपि मृजे। अत्र ऊर्ध्वदर्शनं पुराणेनोक्तम् एकस्य राधस: दर्शनेन सर्वकर्मफलाप्तिश्च सूचिता॥ (म० 3/27).

**'वासयसीव वेधसस्त्वन्न: कदा न इन्द्रवचसो बुबोध:।**

**अस्तं तात्या धिया रयिं सुवीरं पृक्षो नो अर्वान्युहीत वाजी॥**

**( ऋ 7/37/6 )**

'हे वेधस इन्द्रब्रह्मणोऽपि परमेश्वर त्वं न:=अस्मान् कौरव सभायां दु:शासने नोपस्पृष्टवस्त्रान्, बहुत्वं पूजायाम्, वस्त्रान्तरैर्वासयसीव=अच्छादयसीव। ऊर्ध्वोर्ध्ववस्त्रापगमे अन्तरन्तराच्छादितमेव आत्मानं पश्यामि, न तु आच्छाद्यमानमित्यर्थ:। तेन वासयसीत्यनुमीयत इत्यर्थ: न:=अस्माकं वचस: प्रार्थनावाक्यं दूरदेशस्थो भवान् कदा बुबोध=ज्ञातवानसि। त्राहीति वाक्योच्चारणात् प्रागेव त्राणं कृतवानसीत्यर्थ:। किञ्च अस्तम्=गृहम् रयिम्=

राज्यादिकं धनं सुवीरं परीक्षिदाख्यं पुत्रं च, तात्या=पालनेन धियो=बुद्धिसाचिव्येन च पृक्षः =पृतनाः क्षिणोतीति शत्रुसैन्यं संहर्त्ता अर्वानित्यसन्निहितः, वाजी=वेगवान् नः अस्मान् उहीत=अवहत्, प्रापितवान्। जयद्रथवधादौ हि प्रतिज्ञाभंङ्गादर्जुननाशे पाण्डवानां गृहमेव उच्छिन्नं स्यादतो गृहस्य संरक्षणं त्वयैव कृतमित्यर्थः' (म० 4/7)

**'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।**

**धियो यो नः प्रचोदयात्॥**

(ऋ० 1/62/10 शुक्लयजुर्वेद मा० सं० 3/35,22/9, 30/2, सा०म० 2/6/3/10/1)

अत्र करपात्रभाष्ये सवितृपदस्य रामादयोऽप्यर्था अंगीक्रियन्ते। 'सवितृपदेन जगत्कारण-त्वबोधनात् श्रुतिस्मृतिपुराणद्यनुसारेण सूर्यो विष्णुः शिवः रामः कृष्णस्त्रि- पुरसुन्दर्यादयोऽपि गृह्यन्ते।...सवितुः सृष्टिस्थितिलयलीलस्य विष्णोर्देवस्य रामकृष्णाद्यवतारूपेण क्रीडतः असुरान् विजिगीषतः, भर्गः स्वरूपभूतं तेजो धीमहि। यो नोऽस्माकं धियोबुद्धीः प्रचोदयात् प्रेरयति, तत् परमानन्दमयं वरेण्यं भर्गो धीमहि।...तद् वेदान्तेषु ब्रह्मविद्वरिष्ठेषु प्रसिद्धं नित्यज्ञानात्मकं वरेण्यं सर्वजनसंभजनीयं त्रिपुरान्धकादिविविधासुरव्रातं भृज्ज्यत्यनेनेति भर्गः, एवं राणादिभञ्जकत्वेन रामः, कंन्सादिभञ्जकत्वेन कृष्णः, भण्डासुरादिभञ्जकत्वेन त्रैपुरं महः सवितुर्देवस्य, सवित्रुपलक्षितस्य देवसमूहास्य वरेण्यं संभजनीयं तेजो धीमहि।' (शु० मा० स० 3/35, करपात्र०)

**'तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः।**

**स नो बोधि श्रुधी हवमुरुष्याणो अघायतः सममस्मात॥'**

अत्र भगवान् श्रीकृष्णः प्रार्थ्यते। 'हे शोचिष्ठ = ज्योतिष्मत्तम, कोटिकोटिसूर्यसमप्रभ परमात्मन्, आन्तराणां बुद्ध्यादीनां बाह्यानां सूर्यादीनामपि प्रकाशक! 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वभिदं विभाति' (कठो० 5/15), 'येन सूर्यस्तपति तेजसेद्ध' (तै०ब्रा० 3/12/97) इत्यादिश्रुतिभ्यः। दीदिवः = अनन्तानन्तविश्वब्रह्मण्डप्रकाशक, तं वेदान्तेषु प्रसिद्धं त्वा त्वां सखिम्यः त्वदीयसमानस्थानेभ्यो मित्रेभ्यो जीवेभ्यस्तेषां हिताय पापतापवारणाय सुम्नाय ब्रह्मात्मप्राप्तिसुखाय च नूनं निश्चयेन ईमहे = याचामहे! सत्वं नोऽस्मान् बोधि= अनुग्रहपूर्णदृष्ट्यावलोकय। इदं मदीयमाह्वानं प्रार्थनामयं श्रुधि=श्रृणु। समस्मात्=सर्वस्मात्

अधायतः = अस्मासु पापमाचरतो ब्राह्यादान्तराच्च पापकामादेः, नोऽस्मान् उरुष्व = रक्ष स्वात्म प्रकाशनेन। अनेन मन्त्रेण संसारदावानले दंदह्यमाना जीवाः, वृन्दावने दावानलपरीता गोपबालाः, लाक्षागृहदाहपीडिताः पाण्डवाश्च भगवन्तं प्रार्थयन्ते।' (तत्रैव 3/26, करपात्र०) स्वामिना गंगेशानन्देनापि स्वकीये भष्ये कृष्णपरकाणि व्याख्यानानि प्रास्तूयन्त। (तत्रैव, दशाध्यायीभष्यनिष्कर्षे, पृ० 23-24) एवं खल्वाचार्यवर्यनीलकण्ठस्य स्वामिनकरपात्रस्य च मन्त्रव्याख्यानदिशा वैदिकसंहितासु कृष्णचरितं विराजते-इति वक्तुं शक्यते।



# उपदेशकाव्यसन्दर्भे कविक्षेमेन्द्रस्य समाजजीवने विशिष्टमवदानम्

डॉ० दिनेश मणि त्रिपाठी

संस्कृतवाङ्मये कविः क्षेमेन्द्रः स्वतीव्रया निरीक्षणशक्त्या कश्मीरस्य तात्कालिकस्य समाजस्य धर्मस्य च गहनमध्ययनं चकार। महाराजस्य अनन्तदेवस्य (11 शतक) समयात् पूर्वं कश्मीरप्रदेशस्य समाजे विचित्रा स्थितिरासीत्। केचिद् विशिष्टबुद्धिसम्पन्नैः वर्गैः समाजस्य सामान्याः जनाः भृशं परिपीडिता आसन्। जनानां दुःखैः कविः क्षेमेन्द्रोऽपि दुःखितः आसीत्। अतएव तेन स्वकाव्येषु तत्कालीनस्य समाजस्य हृदयग्राहि वर्णनं कृतमस्ति। क्षेमेन्द्रस्य लेखिन्यां बलमस्ति, अनुभवे सत्यतास्ति, लेखनशैल्यां तीव्रता वर्तते, कथने ओजस्वितास्ति, तस्य हृदये चास्ति दुःखपीडितेभ्यः जनेभ्यः सहानुभूतिः।

सत्यपि प्राधान्येऽस्य रचनासूपदेशानाम्, विचित्रा सरलता सरसता च दृश्यते भावाभिव्यञ्जनायाम्। तस्य वर्णनेषु या नवीनता विद्यते या चाधुनिकता वरीवर्ति सा सुतरां पाठकानां मनांसि हरति। क्षेमेन्द्रविरचितानामुपदेशकाव्यानामिदमेव वैशिष्ट्यं महत्त्वं चास्ति यत् ते समाजस्य जीवनोत्थाने महदुपयोगित्वं भजन्ते। अपूर्वमस्ति सुतरां तेषां समाज-जीवनेऽवदानम्। क्षेमेन्द्रविरचितानि उपदेशकाव्यानि सन्ति चतुर्वर्गसंग्रहः, चारुचर्या, दर्पदलनम्, सेव्यसेवकोपदेशः, कलाविलासः, देशोपदेशः, नर्ममाला समयमातृका च।

पण्डितवरेण्येन कविश्रेष्ठेन क्षेमेन्द्रेण लघुकाव्यान्येतान्यष्टसंख्यकानि विरचितानि। एतेषां काव्यानां विषयवस्तु मानवजीवनेन सह पूर्णतया सामञ्जस्यमुपैति। वस्तुतः काव्यानमुपादेयतापि तदैव जायते यदा तेषां सामाजिकी उपयोगिता भवति। चतुर्वर्गसंग्रहे नीतिसंबन्धिनो विषया अतिसरलतया निरूपिता वर्तन्ते। चारुचर्यायां वैदिकी नित्यपूजना-दिक्रिया कथं विधायतव्येति विषये यथाक्रमं निर्देशाः कृताः सन्ति। अत्र दिनचर्या रात्रिचर्या

च सम्यक् निरूपिता विद्यते। अत्र ऐतिहासिकीं समस्तघटनां सोदाहरणं वर्णयित्वा कविः मनुष्याणां कृते विशिष्टां शिक्षां प्रददाति, यां शिक्षां मनस्यवधार्य कोऽपि मनुष्यः नानाविधं सुखं शान्तिं चाधिगन्तुं शक्नोति।

क्षेमेन्द्रस्य दर्पदलनमस्ति लघुकाव्यमेकं यत्र मदस्य कारणानि कविना निरूपितानि सन्ति।[1] विषयमिमं निरूप्य क्षेमेन्द्रेण जीवलोकस्य महदुपकारः कृतोऽस्ति। सेव्यसेवकोपदेशः इति काव्ये सेवायाः स्वरूपं विचारितम्, अनन्तरं सेवकस्य सेव्यस्य च कृते साध्वाचाराः प्रतिदिताः सन्ति। सन्तोषस्य माहात्म्यमस्मिन् प्रसङ्गे कविः विशेषेण वर्णयति।[2] कुलदोषस्य त्यागः सर्वथा कार्यः येन देशस्य समाजस्यैक्ये हानिर्न भवेत्।[3]

कलाविलासः देशोपदेशः नर्ममाला चेति काव्यानि त्रीणि क्षेमेन्द्रेण समाजे धनिकेषु लोभस्य निकृष्टं रूपमुपस्थापयितुं लिखितानि। मानवचरित्रे कियत् पतनं भवति लोभादिति कथामुखेन वर्णितमस्ति व्यङ्ग्यकारेण क्षेमेन्द्रेण। अत्र मूलदेवः वञ्चकानां चरित्रवर्णनं कृत्वा लक्ष्म्याः रक्षायाः उपदेशं करोति।[4]

क्षेमेन्द्रः न केवलं विदग्धानां कविरस्ति अपितु साधारणजनताया अपि कविरस्ति। तस्य रचनायाः उद्देश्यमेव सकलजनमनोरञ्जनपुरस्सरं जनानां चरित्रनिर्माणमप्यस्ति। अस्मिन्नुद्देशे कविरयं सुतरां सफलोऽस्ति। अनयैव भावनया प्रेरितो भूत्वा कविः चतुर्वर्गसंग्रहादीनां लघुकाव्यानां रचनां कृतवान्। अस्य कवेः काव्ये जनानां जीवनोपयोगिनः सर्वे उपदेशाः विभिन्नरूपेण प्रदत्ताः सन्ति। न केऽप्येवंभूता वर्तन्ते येषां चर्चा कवेरस्य काव्ये न कृता दृश्यते। वस्तुतः सर्वाण्येव क्षेमेन्द्रस्य लघुकाव्यानि जनहितायैव विरचितानि सन्ति।

---

1. कुलं वित्तं श्रुतंशौर्यं दानं चैव तपस्तथा।
   प्राधान्येन मनुष्याणां सप्तैते मदहेतवः॥—दर्पदलनम्, श्लोक 5
2. विभूषणाय महते तृष्णातिमिरहारिणे।
   नमः सन्तोषरत्नाय सेवाविषविनाशिने॥—सेव्यसेवकोपदेशः, स्लोक 1
3. कुलस्य कमलस्यैव मूलमन्विष्यते यदि।
   दोषपंकप्रसक्तान्तस्तदावश्यं प्रकाशते॥—दर्पदलनम् 1/6
4. शृणु पुत्र वञ्चकानां सकलकलाहृदयसारमतिकुटिलम्।
   ज्ञाते भवन्ति यस्मिन् क्षणरुचिचपलाः श्रियोऽप्यचलाः॥—कलाविलासः, 1/30

नूनं कवयो समाजनिर्मातारो भवन्ति। समये-समये समाजे प्रसृतां कुरीतिं दुर्व्यवस्थां चावलोक्य विषण्णहृदया इमे तत्र संशोधनाय स्वं स्वं काव्यं चक्रुः। ते तत्र एवंभूतानां विषयाणां ग्रथनमकुर्वन् यान् विज्ञाय सामाजिकाः सामाजिकदोषनिवारणाय उद्यताः भवेयुरिति बुद्धया कवीनां काव्यं निर्मीयते। वस्तुतस्तु कस्यापि काव्यस्य यदि समाजेन सह सम्बन्धो न स्यात्तर्हि तस्य काव्यत्वमेव न सिद्ध्यति। अतः सामाजिकीमुपयोगिताम् आदायैव कवयः प्रायेण काव्यनिर्माणे प्रवृत्ताः भवन्ति। तैः समाजे यद् यद् अवलोक्यते तस्य तस्यैव कर्मणः विवेचनं क्रियते स्वकीये काव्ये। एवं कविभिः विवेचितां प्रदर्शितां वा व्यवहारसरणिमनुसृत्य सामाजिकाः स्वाचरणमपि तदनुकूलं कुर्वन्ति। इत्थं कवीनां भवति समाजनिर्माणे महदवदानम्।

कविना क्षेमेन्द्रेणापि स्वीकयेषूपदेशकाव्येषु समाजस्यैव विस्तृतं वर्णनं कृतं मानवस्य हिताय। चतुर्वर्गसंग्रहे धनस्य महत्त्वनिर्देशनपुरस्सरं कविरसौ सर्वविधस्य चारित्रिकपतनस्य कारणं धनमेवेति प्रमाणयति। संसारे धनपुरुषार्थसेवनपरैः किं किं गर्हितं न क्रियते इति निर्दिशति क्षेमेश्वरः। सर्वत्र धनार्थं लुण्ठनमेव धर्मस्य रूपं गृहीत्वा प्रचलतीति भ्रष्टसमाजस्य रूपरेखा दृश्यते चतुर्वर्गसंग्रहे। भ्रष्टसमाजस्य वर्णनं कृत्वा कविः धर्मस्य माहात्म्यं शब्दैरेभिः वर्णयति—

**धर्मः शर्म परत्र चेह न नृणां धर्मोऽन्थकारे रविः**

**सर्वापत्प्रशमक्षमः सुमनसां धर्माभिमानो निधिः।**

**धर्मो बन्धुरबान्धवे पृथु पथे धर्मः सुहृत् निश्चलः**

**संसारोरुमरुस्थले सुरतरुर्नास्त्येव धर्मात् परः॥**[1]

क्षेमेन्द्रस्य अयमेव सन्देशः यत् सर्वस्यामवस्थायां धर्मोऽयं संसेव्यः यतो हि संसारमरुभूमौ धर्मः कल्पवृक्ष इव जनानां मनोरथसम्पादको भवति। अतएव कविना उक्तमस्ति—

**कर्णे धर्मकथा मुखे परिचितं धर्माभिरामं वच-**

**श्चित्ते धर्ममनोरथः प्रणयिनी सर्वत्र धर्मस्थितिः।**

---

1. चतुर्वर्गसंग्रहः 9/1

**काये धर्ममयी क्रियापरिकरः सोऽयं शुभप्राप्तये**

**कल्याणाय पदेऽप्युपप्लवलवैरस्पृष्टवेदाफलः ।।**[1]

एवं क्षेमेन्द्रस्य काव्यमिदं धर्मस्य विषये स्वीयेनोपदेशेन समाजस्य बहुभागे प्रदत्तेनावदानेन समाजपरिष्करणे महत्कार्यं करोति। दर्मस्य महत्त्वं प्रतिपादितं कविना धनस्य पुरुषार्थस्य उपेक्षा नोपदिष्टा। येन धनेन दानादिक्रिया यज्ञक्रिया च सम्पाद्यन्ते तत्र स्वर्गस्य साधनमेव भवति। वस्तुतस्तु धनं सर्वत्रापेक्षते धर्मसम्पादनार्थम्। धनात्मिका बुद्धिरपि साधु भवति। अत्रापीदमेव विचारणीयं यत् तदेव धनं त्रिवर्गमूलमुक्तं यत् सुकर्मणा परिश्रमेण चोपार्जितं भवति। एवं च यत्र परपीडां विनैव धनार्जनं वर्तते तदेव शुद्धं तदेव दान-यज्ञादौ ग्राह्यं नान्यदिति विशेषेण ध्यातव्यमस्ति। धनविषये क्षेमेन्द्रेणोक्तम्-

**दानादिधर्मः क्रियते धनेन धन्या धनमाप्नुवन्ति।**

**धनैर्विना कामकथापि नास्ति त्रिवर्गमूलं धनमेव नान्यत् ।।**[2]

तृतीयोऽपि पुरुषार्थः क्षेमेन्द्रेण उपदेशदृष्ट्या एवं वर्णितोऽस्थि। तत्र प्रथमं सांसारिक-दृष्ट्या कामासक्तानां ललितललनालीलानां सम्यक्वर्णनं कृतमस्ति कविना। पश्चाच्च तासु आसक्तानां पुरुषाणां का दशा भवत्यन्ते विषयेऽस्मिन्नुपदेशा कृताः सन्ति। उदाहरणरूपेण श्लोक एकः दीयतेऽत्र-

**स्मरशरनिशिताक्ष्याः कम्पयन्ते न केषां**

**कुरुव इव कटाक्षाः प्रौढ़शल्या मनांसि।**

**भुवनजनजिगीषोत्साह योगाय येषा-**

**मधिचपलतराणां निश्चला कर्णपत्री ।।**[3]

कवेः क्षेमेन्द्रस्यात्र वक्तव्यमिदमेव यत् ललना तु धार्मिककृत्यसम्पादने पुरुषाणां अर्धमांगत्वात् यज्ञधर्मसम्पादनाय अनिवार्यरूपेण सहभागिनी शास्त्रकरैरुक्तास्ति।

---

1. तदेव 1/4
2. तदेव 2/12
3. कामप्रशंसा 3/8

अनासक्तभावेन तया सह सम्बन्धो भवति धार्मिकः प्रशस्यश्च। आसक्तो तु पुरुषं सा कर्त्तव्याकर्त्तव्यविषये विचाररहित्यमुत्पाद्य निरन्तरं कामपूजार्थमेव प्रेरयति। कामस्य सेवनं विवेकानुसारमेव कर्त्तव्यमिति कवेरयमेव सन्देशः।

चारुचर्या इत्युपदेशकाव्येऽपि मानवजीवनसम्बन्धिनः सदाचारस्योपदेशाः वर्णिताः सन्ति। अत्र विषयोऽयं विचारणीयोऽस्ति यत् अनेन काव्येन समाजे किं योगदानं विहितमस्ति। काव्यानान्तु समाजिकोपयोगे एवं काव्यत्वम् अत्र मानवानां कल्याणमेव क्षेमेन्द्रस्य मुख्यतया प्रयोजनं वर्तते। अत एव 'चारुचर्या' इति काव्यं रचयिता अयमेवोपदेशः दत्तः यत् प्रतिदिनं कथमाचरणीयं येन जीवनस्य विशुद्धिः स्यात्। विषयेऽस्मिन्नुक्तं कविना-

**ब्राह्मे मुहूर्त्ते पुरुषस्त्यजेत निद्रामतन्द्रितः।**

**प्रातः प्रवृद्धं कमलमाश्रयेच्छ्रीगुणाश्रया ॥[1]**

श्लोकेऽस्मिन् प्रातर्जागरणं प्रशस्तं भवतीति कविना संकेतितम्। प्रातर्जागरणं बहुगुणकारी। अनेन मनुष्याः सन्ध्याद्युपासनेन ब्राह्मे मुहूर्त्ते पुण्यार्जनं कुर्वन्ति दिनं यावच्च पठनपाठनादिकार्याणां क्रमः सुचारु प्रचलति। प्रातः अन्येषामपि देवाभ्यर्चनादि-कर्मणामुपदेशः कृतः कविना। उक्तं चात्र-

**न कुर्वीत क्रियां काञ्चिदनभ्यर्च्य महेश्वरम्।**

**ईशार्चनरतं श्वेतं नाभून्नेतुं यमः क्षमः ॥[2]**

अनन्तरं श्राद्धकर्म निर्दिष्टम्। शयनविधानं भोजनविधानं जपहोमादिकर्म निर्दिष्टम्। जपहोमादि विषये उक्तम्-

**जपहोमार्च्चनं कुर्यात् सुधौतचरणः शुचिः।**

**पादशौचविहीनं हि प्रविवेश नलं कलिः ॥[3]**

एवं मानवजीवनेन सम्बन्धितं सर्वमाचरणीयमाचरणमुपदिश्य महदुपकृतं जगदिति नात्र

---

1. चारुचर्या, श्लोक 1
2. तदेव, श्लोक 4
3. तदेव, श्लोक 8

सन्देहः। इत्थमस्य क्षेमेन्द्रकाव्यस्योद्देश्यं लोकहितमेव वर्तते। नूनमेतेषां विधानानां ज्ञाने न सति मनुष्यः पशुभ्यः भिन्नो न भवेत्। काव्यमिदं मानवजीवनस्य कृते तथैवापेक्षितं यथा जीवनधारणाय भोजनमपेक्षितमावश्यकञ्च भवति। अन्तिमदशायान्तु भगवच्छरणेव आश्रयो भवति जन्मवताम्। अतस्तत्स्मरणं कथं सततं कुर्यादिति कवेरुद्देश्यमस्ति। काव्यस्यान्ते कविनोक्तमपि–

**अन्ते सन्तोषदं विष्णुं स्मरेद्घनतरमापदाम्।**

**शरतल्पगतो भीष्मः सस्मार गरुडध्वजम्।।**[1]

दर्पदलनमित्यपि काव्यं लोकदृष्ट्यैव विनिर्मितं कविना क्षेमेन्द्रेण। इह जगति जायमाना येऽपि मनुष्याः सन्ति तेषां सन्दर्भे दर्पविचारः कृतोऽस्ति काव्येऽस्मिन्। दर्पस्तु जनजीवनस्यासाध्यरोगोऽस्ति। अस्य चिकित्सा वैद्येन कर्तुं न शक्यते। अत एव कविः स्वकाव्यप्रतिपादितेन विषयेणैव दर्परोगं चिकित्सितुं प्रायतत। प्रायः व्यवहारे दृश्यते यत् कोऽपि अद्वितीयस्य स्वात्मनः सौन्दर्यस्य समक्षं परान् न्यक्करोति। तत्रैवान्यः कृतस्य उन्नत्या, कोऽपि च शौर्येण, अन्यः दानेन तदतिरिक्तस्तपसा अन्यश्च विद्यया अन्यान् जनान् तिरस्करोति। एतदवलोक्य कविः क्षेमेन्द्रः 'दर्पदलनम्' काव्यं रचितवान् लोकहिताय। दर्पेण प्रताडितस्य जनस्य कोऽपि रक्षको नास्ति। अत एवोक्तं कविना–

**अहंकाराभिभूतानां भूतानामिव देहिनाम्।**

**हिताय दर्पदलनं क्रियते मोहशान्तये।।**[2]

केचिदत्र कुलाभिमानेन ग्रस्ताः सन्ति। तान् प्रति कवेरयं सन्देशः–

**कुलं कुलं कलयतां मोहान्मिथ्याभिमानिनाम्।**

**लग्नः कोऽयं न जानीमः स्तब्धग्रीवाग्रहग्रहः।।**[3]

लोके कुलाभिमानेन पतितो जनः स्वसमक्षं कमपि न गणयति। परन्तु विषयेऽस्मिन् उक्तं कविना यद् यदि कुलाभिमानिनोऽपि स्वं कुलं सूक्ष्मरूपेण द्रष्टुमुद्यताः स्युस्तदा तेषां

---

1. तदेव, श्लोक 99
2. दर्पदलनम्, कुलविचारः, श्लोक 5
3. तदेव, श्लोक 6

तदभिमानं स्वयमेव प्रहतं भवेत्।[1] वस्तुतस्तु दर्पेण केवलं स्वात्मनः क्षतिरेव भवति। तस्याः क्षतेः पूर्तिः कथमपि कर्त्तुं न शक्यते।

एवं कविः क्षेमेन्द्रः धनस्यास्थिरतां प्रतिपाद्य धनाभिमानं वारयति। विद्यायाः अभिमानः सर्वथा त्याज्यः यतो हि विद्यायाः अन्तो न विद्यते। विद्यादर्पस्य विलक्षणा दशा वर्तते। मनसि प्रविष्टेऽपि न ज्ञातुं शक्यते। उक्तञ्च कविना–

**संसारदोषप्रशमैकहेतुः करोति विद्या यदि दर्पमोहम्।**

**तदन्धकाराय भवत्यवश्यं साभ्रे नभस्यांशुमतोंऽशमाला।।**[2]

रूपन्तु तत्रास्ति सर्वाधिकं दर्पकारणं जगति। रूपाभिमाने रूपवान् केनापि सह वार्तामपि कर्तुं नेच्छति। यथा कमलं कालान्तरे मलिनं भवति तथैव रूपस्य शरीरसौन्दर्यस्यापि दशा भवति। अन्यद् वस्तु तु मरणान्ते मनुष्यं त्यजति, रूपन्तु जीवनदशायामेव जरागते सति तं विहाय गच्छति, तं विरूपं च कृत्वा तस्य दर्पस्य नाशं करोति। अतएव रूपदर्पो न कदापि कर्त्तव्यः मनुष्येण।

शौर्यन्तु समधिकदर्पकारणमस्ति मनुष्याणाम्। शौर्याभिमानिनः हृदये सदैव एष एव भावः उदेति यद् जगति मत्तुल्यो नान्यः कोऽपि शूरः। अनेव मदेन मदान्धः सन् सः सर्वत्र व्यवहरति।

**शौर्येण दर्पः पुरुषस्य कोऽयं दृष्टस्तिरश्चामपि शूरभावः।**

**औचित्यहीनं विनयव्यपेतं दयादरिद्रं न वदन्ति शौर्यम्।।**[3]

अत्र शौर्यं गुणहीनं भवतीति कविरुक्तवानस्ति। शौर्यदर्पे ध्रुवमेवोचितानुचितविवेकहीनता जायते एवं तत्र औचित्यविचारस्य चर्चैव नास्ति। तस्मिन् दर्पान्विते जने विवम्रता तु क्षणमपि न तिष्ठति। सर्वत्र स उद्धतव्यवहारपरायण एव भवति। दयादृष्ट्या तु सः सर्वथा दरिद्रो जायते।

---

1. कुलस्य कमलस्येव मूलमन्विष्यते यदि।
   दोषपंकप्रसक्तान्तस्तदावश्यं प्रकाशते॥—दर्पदलनम्, कुलविचारः, श्लोक 7
2. दर्पदलनम्, विद्याविचारः, श्लोक 1
3. दर्पदलनम्, शौर्यविचारः, श्लोक 1

शौर्यदर्पेण ग्रस्तः पुरुष केनापि कारणेन विनापि हन्तुमपकर्त्तुं च क्षणमपि न विरमति। इत्थमेतद् विषयकेन दर्पेणापि तस्य कदापि दर्पनाशोऽपि जायते। अत्र कविरुदाहरण-द्वयप्रदर्शनद्वारा तत्फलं प्रकाशयति-

**यः कार्तवीर्यस्य च दोः सहस्त्रं चिच्छेद वीरो युधि जामदग्न्ये।**

**स सायके रामकराधिरूढे ब्राह्मण्यदैन्यः प्रणयीबभूव ॥[1]**

अत्र कार्तवीर्यस्य युधि सहस्त्रभुजोच्छेदनेन संजातदर्पः परशुरामः रामे गृहीतसायके सति ब्राह्मणोचितदैन्यं प्रकाश्य दर्पँ तत्याजेति वर्णनं कृत्वा कविः शौर्यदर्पस्य व्यर्थतां प्रतिपादयति। एवमन्यत्रापि विषयेऽस्मिन् द्रष्टव्यम्-

**रामोऽपि साहायकलाभलोभात् चक्रे कपेः सश्रयदैन्यसेवाम्।**

**शूरप्रतापः शिशिरर्तुनेव कालेन लीढस्तनुतामुपैति ॥[2]**

इत्थमन्यत्रापि शौर्यदर्पस्य का गतिर्भवतीति वर्णयति कविरेभिः शब्दैः

**बाली प्रसह्य प्लवगल्करेण सोल्लासकैलाससहं दशास्यम्।**

**निक्षिप्य कक्षान्तसन्धिबन्धे सप्ताब्धिसन्धाविधिमन्वतिष्ठत् ॥[3]**

अत्रदाहरणेषु समधिकबलशालिनां शूराणामुदाहरणानि प्रदर्शितानि सन्ति। सर्वे सन्ति ऐतिहासिकयोद्धारः। परन्तु समयप्रभावात् सर्वेषां दर्पः खण्डितः जातः। क्षेमेन्द्रस्य काव्ये दर्पदलने उपदेशस्यायमप्यंशः जनकल्याणे लोकमंगले वा महदवदानं करोति।

दानदर्पोऽपि समाजे विषमः रोग इव दृश्यते। अयमपि महद्घातकः। दानदर्पविषये कविनोक्तम्-

**जगत्येको भद्रद्विरद इव दानार्द्रसरणि-**

**र्यशस्वी निःस्वानामहमभिमताशाफलतरुः।**

---

1. तदेव, शौर्यदर्पः, श्लोक 8
2. तत्रैव, श्लोक 9
3. तत्रैव, श्लोक 10

**इति त्यागोऽग्रं वहसि किल दर्पं मनसि य-**

**स्तदुद्धृतं सर्वं सुकृतमपहाय व्रजति ।।[1]**

इत्थं सति दानदर्पे दानिनः सुकृतं नष्टमेव भवति। अत एव दानदर्पस्य सर्वथा त्यागः करणीयः। दानस्य प्रशंसां कुर्वन् कविः कथयति-

**परार्तिशमनं वित्तमज्ञातमनुदीरितम्।**

**अफलाकांक्षया युक्तं प्रत्यात्यल्पमनल्पताम्।।[2]**

तपश्चरणस्यापि दर्पः दृश्यते लोके जनेषु। अस्मिन्विषये दर्पः कथमपि हितावहः न भवति। तपस्तु सर्वदैव रागधनाभिमानमोहविनाशाय चित्तशान्तये च कल्पते। किन्तु यदि तेनैव कारणेन यदि दर्पः जायते तदा निश्चयेन निष्फलं भवति तत् तपश्चराणाम्। कविः क्षेमेन्द्रः कथयति विषयेऽस्मिन्-

**सर्वात्मना शुद्धधिया विधेयः संसारदोषप्रशमाय यत्नः।**

**कोपोपतप्तं धनरागदग्धं करोति तीव्रं न तपः प्रशान्तिम्।।[3]**

इत्थं दर्पदलनमिति काव्यमपि कवेरस्य महदुपयोगि समाजदृष्ट्यास्ति। कविना लोककल्याणकामनया काव्यमाध्यमेन विशिष्टः सन्देशः दत्तः। अस्य कवेः 'सेव्यसेवकोपदेशः' इति काव्यमपि प्रभूणां धनिनाञ्च स्वभावं निरूपयति याथातथ्येन। तत्कालीनः समाजोऽपि भ्रष्टाचारग्रस्तः आसीत्, येन प्रेरितः कविः काव्येऽस्मिन् समाजस्य विशेषेण धनवतां दोषान् वर्णयति, तान् वर्जयितुमुपदेशं ददाति। सेवाकर्मणः निन्दां कुर्वन् कथयत्यसौ-

**मन्ये सुकृतिना तेन भागीरथ्यां कृतं तपः।**

**वैराग्यभागी रथ्यां यः सेवासु न विगाहते।।[4]**

---

1. तदेव, दानविचारः, श्लोक 1
2. दर्पदलनम्, दानविचारः, श्लोक 7
3. तदेव, तपोविचारः, श्लोक 1
4. सेव्यसेवकोपदेशः, श्लोक 8

**कलाविलाशः** क्षेमेन्द्रस्यान्यतमा कृतिरस्ति यत्रोपहासमाध्यमेन महतामपि दोषाः प्रदर्शिताः, तान् दोषान् दूरीकर्तुमुपदेशश्च प्रदत्तः। जनाः समाजे प्रख्यातानां श्रेष्ठजनानामेव चरितमनुकुर्वन्ति, अतः तेषां लोकसमादृतानां पुरुषाणामयमेव कर्त्तव्यं यत् ते स्वयं स्वकीयचरित्रदोषान् परिहरेयुः।

क्षेमेन्द्रस्यान्यस्मिन् काव्ये 'देशोपदेशः' इति नामकेऽपि समाजस्य कल्याणार्थं गुरोः विटानां वेश्यानां छात्राणाञ्च वर्णनानि कृतानि। अत्रापि कवेः समाजस्य दोषान् प्रदर्श्य तेषां परिमार्जनमेवोद्देश्यमस्ति। एवं क्षेमेन्द्रस्य काव्येषु सर्वत्र समाजदृष्ट्यैव वर्णनं कृतमस्ति। कविना काव्यद्वारा लोकस्य जीवने यदवदानं कृतं तत् सुतरां प्रशंसार्हमस्ति। उपदेशात्मकेषु काव्येषु क्षेमेन्द्रस्य कृतयः प्रथमं स्थानं भजन्त इति नात्र सन्देहलेशः।



# अनुवाद-पुनरुक्त्योः प्रामाण्याप्रामाण्यम्

श्रीमती ललिता चक्रवर्ती, शान्तिनिकेतन प० बंगाल

अनुवादपुनरुक्त्योः व्युत्पत्तिगतेऽर्थे साम्यमस्ति यतः 'अनु' पश्चात् वादः कथनरूप-मनुवचनं हि अनुवादः, पुरुक्तञ्च पुनर्वचनम्, उभयत्र हि अर्थशब्दाश्च अभ्यसन्ते, तथापि तेषां प्रामाण्याप्रामाण्यविषये दार्शनिकसम्प्रदायेषु मतान्तराणि दृश्यन्ते, मीमांसकानां नये अनुवादमात्रमप्रमाणमेव, महर्षि जैमिनि (ख्री० पू० पंचम श) औत्पत्तिकस्तु....(मी० सू० 1-1-5) इति सूत्रान्तर्गतस्य 'अर्थेऽनुपलब्धे' 'इति पदेन स्मृत्यनुवादयोरप्रामाण्यमेव सूचयित[1] यतः तेषां मतानुसारेण अगृहीतग्राहित्वमेव प्रमाणत्वम्।[2] अनुवादस्थले पूर्वप्रतीतार्थस्य शब्दस्य च पुनः कथनात् तेषां गृहीतग्राहित्वाच्च नापि प्रमाणत्वं न वा यथार्थत्वम्।[3] किन्तु दर्शनान्तरेषु-विशेषतः नैयायिकानां नये अनुवादमात्रं न तु हेयं न वा उपेक्षणीयम्।[4] पूर्वोल्लिखितविषयस्य पुनः कथनसत्त्वेऽपि तात्पर्यविशेषवशात् अनुवादः प्रमाणमेव। किन्तु

---

1. अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यमस्तीति 'अर्थेऽनुपलब्धे' इत्यनेनोक्तम्; शास्त्रदीपिका; बनारस; 1916; पृ०-122।

   तथाच-सर्वस्यानुपलब्धार्थे प्रामाण्यं स्मृतिरन्यथा; (श्लोकवार्तिकम् त्तात्पटीकासहितम्) मद्रपुरी विश्वविद्यालयः, 1940, पृ० 185

2. कारणदोषबाधकज्ञानरहितमगृहीतग्राहि ज्ञानं प्रमाणमिति प्रमाणलक्षणं सूचितम्; शास्त्रदीपिका; बनारस; 1916; पृ०-122।

3. प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः॥

   ताद्रूप्येण परिच्छिन्ने, प्रमाणं निष्फलं परम्॥

   श्लो० वा० (तात्पर्य टीका सहितम्) मद्रपुरी विश्वविद्यालयः, 1940, पृ० 318-319।

   अनुवादो हि अर्थपरिच्छेदे व्यवहारे वा न पूर्वज्ञानात् किंचिद्विशेषमाधत्ते, अतः फलविशेषाभावात्, फलार्थञ्च प्रमाणानां स्वीकारात् स्मृत्यादिवदनुवादोऽपि बहिष्कार्य एव इति।

4. अनुवादोपपत्तेश्च; न्यायसूत्रम्: II-1-60।

दोषवशात् न्यायदर्शने पुनरुक्तिर्वर्णनीया।[1] अथ च इयं पुनरुक्तिः वैयाकरणैः स्वीक्रियते। कथं नैयायिकाः पुनरुक्तिं दूषयन्ति? अनुवादस्य च प्रामाण्यं समर्थयन्ति कथं वा वैयकरणैः द्विवचनं (पुनरुक्तिः) समाद्रियते-**इति अस्मिन् लेखे अहं विचारयामि**' अत्रादौ अनुवादस्य स्वरूपस्तथा प्रामाण्यविषये नैयायिकानां यदभिप्रायः तदालोच्यते।

'विधिविहितस्यानुवचनमनुवादः (न्या० सू० II-1-65)-अर्थात् विधेरनुवचनं विहितस्य वाऽनुवचनमनुवादः। अत्र 'अुवचनमिति पदेन तस्य लक्षणमपि निर्दिश्यते। तत्र विधेरनुवचनं शब्दानुवादः, विहितस्यानुवचनमर्थानुवादः। यथा वेदे त्रिःप्रथमामन्वाह त्रिरुत्तमाम्-अत्र एकादशसामिधेनीनां प्रथमोत्तमयोस्त्रिर्वचनरूपो योऽभ्यासः स शब्दानुवादः। अश्वमेधेन यजेत' इति विहिताश्वमेधयज्ञस्य पुनर्वचनं-तरति मृत्युं तरति पाप्मानं योऽश्वमेधेन यजेत-इति अर्थानुवादः। सूत्रकारस्य गौतमस्य (स्त्री, प्रथम श०) अभिप्रायमनुसृत्य वृत्तिकार आचार्य विश्वनाथः (1600 ख्री०) अनुवादस्य निष्कृष्टं लक्षणं दर्शयति-प्राप्तस्य अनु-पश्चात् कथनं सप्रयोजनमनुवादः।[2] इति। अर्थात् सप्रयोजनत्वे सति अनुवचनम्-अनुवादः।

ननु सप्रयोजनमिति पदेन कीदृशं प्रयोजनम् अभिहितं तदुत्तरेणाह-अधिकारार्थम् इति।[3] अर्थात् विधिं विहितञ्च अधिकृत्य स्तुतिनिन्दारूपं-प्रयोजनार्थे-विधेः विहितस्य च-अनुवचनं स्यात् तत्र पूर्वोक्तशब्दानुवादस्थले सामिधेनीन पञ्चदशत्वविधानं प्रयोजनम्, तरति मृत्युं.... इति अर्थानुवादस्थले 'अश्वमेधेन.....' इत्यादिना विधिवाक्येन अश्वमेधयज्ञे विहितेऽपि अस्य यज्ञस्य फलं कीदृशम्, किं प्रयोजनार्थञ्च अयं यज्ञःविधीयते तब्दोधनार्थम् अश्वमेधयज्ञस्य स्तुतिं प्रकाश्य अस्य पुनर्वचनं विधीयते, अत्र अनेन पुनर्वचनेन विशेषार्थस्य प्रकटितत्वात् अस्य उपेक्षणम् असम्भवम्, पुनश्च उदिते होतव्य अनेन विधिवाक्येन अग्निहोत्रहोमस्य कालत्रयाणि विधीयन्ते, अस्य अर्थवाक्‌य-श्यावोवाऽस्याहुतिमभ्यबहरति य उदिते जुहोति- अत्र विधिविहितस्य उदितकालस्य यत् पुनर्वचनं भवति तत् निन्दा ज्ञापनार्थमेव, यतः यः

---

1. तदप्रामाण्यमनृतव्याघात पुनरुक्तदोषेभ्यः; तदेव II-1-57।
2. द्रष्टव्यः-प्राप्तस्य अनु पश्चात् कथनं सप्रयोजनम् अनुवाद इति सामान्यलक्षणम्; न्यायदर्शने विश्वनाथ वृत्तिः; 1985; पृ० 562, नई दिल्ली।
3. किमर्थं पुनर्विहितमनूद्यते? अधिकारार्थम्; विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा,.....। न्यायभाष्यम् तदेव; पृ०-561

सूर्योदयादनन्तरं आहुतिं ददाति श्याव इति देवतायाः सारमेयः तस्य आहुतिं भुङ्क्ते।

अत्र शङ्का उदेति-वैदिकमन्त्रेण उदयकाले आहुतिः विधीयते, पुनः किमर्थम् अर्थवाद वाक्ये एवंविधाचरणस्य निन्दा च दृश्यते। समाधानं यत्-ईदृशी निन्दा अधिकारिविशेषेषु प्रयुज्यते। यतः उदयकाले होमे विहितेऽपि य उदयकाले होमं सङ्कल्प्य तस्मिन् काले आहुतिप्रदानं करोति स एव कृतकृत्यो भवति। किन्तु योऽनूदितकाले होमस्य.....सङ्कल्पं कृत्वा उदित काले आहुतिं ददाति तादृशस्य अधिकारिविशेषस्य आहुतिमेव अनुरूपो भावेन भावेन भासितं भवति। ईद्वशं निन्दाज्ञापनरूपं प्रयोजनवशेषज्ञापनं हि अस्य पुनर्वचनस्य अभिप्रायः। फलतः तन्नानर्थकमेव।

विहितस्यानुवचनस्य प्रयोजनान्तरं भाष्यकारेण कथितम्-विहितमधिकृत्यविधिशे-षोऽभिधीयते।[1] यथा विधिवाक्ये अग्निहोत्रं जुहोति अस्य अनुवादः-दघ्ना जुहोति। अर्थात् अस्मिन् विधिवाक्ये प्राप्तस्य 'जुहोति' इति पदस्य द्विरभिधानम्' दधिरूप-गुणविशेष-विधानाय ईदृशोऽनुवादो भवति। 'अग्निहोत्र होमं कुरु' इत्येवं बिधिवाक्यं श्रवणमात्रेणैव श्रोतृहृदये जिज्ञासा जायते-केन वस्तुना होमं विधास्यति? तदपरेण 'दध्ना' इति पदेन यज्ञकरणत्वं विधीयते। केवलमात्रं 'दध्ना इति विधेयपदेन सम्यगर्थः परिस्फुटः भवति इत्येवं नाभिहिते 'जुहोति' पदस्य अनुवादेन दधिरूपविधेयस्य उद्देश्यं प्रकाश्यते। अर्थात् विहितं होममधिकृत्य ईदृशो विधिशेषोऽभिहितो भवति।

विहितकर्मणोऽऽनन्तर्यविधानमपि अनुवादस्य प्रयोजनम्[2] दर्शपौर्णमासयागः यथा विधीयेत तथैव सोमयागोऽपि, एषा पूर्वापरत्वविषये संशयो जायते। तदुक्तं दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेत। अर्थात् दर्शपौर्णमासादनन्तरं सोमयागः कर्त्तव्यः। अत्र यागानाम् आनन्तर्यविधानं हि अनुवादस्य प्रयोजनम्, अतः तत्प्रयोजनत्वात् अनुवादः प्रमाणमेव।

वैदिकवाक्यवत् लौकिकवाक्येष्वपि अनुवादस्य पुनर्वचनस्य वा प्रामाण्यं परिलक्ष्यते। यथा लौकिकवाक्यं ओदनं पचेदिति अस्य अर्थवादवाक्यं-आयुर्वर्चो बलं सुखं प्रतिभा

---

1. .........., विधिशेषो वाऽभिधीयते। तदेव।
2. विहितान्तरार्थोऽपि चानुवादो भवति; तदेव; पृ०-562

नचान्ने प्रतिष्टितम्[1], अन्नपाकस्य कर्त्तव्यताया प्रयोजनकथनार्थम् अन्नस्य अनुवादोऽऽव-श्यकम्। विधेः विहितस्य वा अनुवादव्यतिरेकेण अर्थवादवाक्यं न संभवति। सुतरां सप्रयोजनानुवादस्य प्रामाण्यम् अस्वीकार्यम्। किंवा, यथा 'शीघ्रं गम्यताम्' इति कथनादन्तरं 'शीघ्रं शीघ्रं गम्यताम्' इत्येवं कथ्यते तदा द्वितीयवाक्ये शीघ्र शब्दस्य पुनर्वचनं सन्नपि गमनकर्मणोऽऽतिशय्यविधानार्थं पुनर्वचनं सप्रयोजनं प्रमाणं वा।

ननु अनुवादपुनरुक्त्योः नास्ति कश्चित् विशेषः। अनुवादवत् पुनरुक्तमपि द्विविधम्-शब्दपुनरुक्तम्, अर्थपुनरुक्तञ्चेति[2] आदौ उभयत्र व्युत्पत्तिगतार्थैक्यं वर्तते तत्र पुनरुक्तमसाधुः, किन्तु अनुवादः साधुरेव-कथमेतद् संभवि? भाष्यकारेणापि आह-पुनरुक्तञ्च प्रमत्त-वाक्यमिति।[3] यत् प्रमत्तवाक्यं तन्न प्रमाणम् अनाप्तत्वात्। किञ्च सूत्रकारः उभयत्र प्रतीतार्थशब्दस्याभ्यासत्वात् पुनरुक्तानुवादयोः न[4] किञ्चित् विशेषमाधत्ते। उभयत्रैव पूर्वप्रतीतार्थशब्दा अभ्यस्यन्ते। यथा—'गच्छ गच्छ' इति वाक्यान्तर्गतस्य द्वितीयात् 'गच्छ' इति शब्दात् यदर्थं प्रतिपाद्यते तत् आद्येनैव प्रतीयते।

नैयायिकानाम् उपर्युक्तमतं परस्परविरुद्धवदप्रतीतेऽपि प्रकृतपक्षे नैयायिकैः अनुवाद-पुनरुक्त्योः भिन्नत्वमेव स्वीक्रियते। 'शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्' (न्या० सू० 5/2/14) इति सूत्रस्थितेन 'अन्यत्रं शब्देनैव तदप्रतीयत इत्येवं सूत्रकारस्याभिप्रायः नान्य, अर्थवान् अभ्यास अनुवादः। अर्थवत्वरूपं प्रयोजनवत्वमेव अनुवादस्य प्रामाण्यम्। निष्प्रयोजनं पुनरभिधानं पुनरुक्तम्; अपि च व्याख्यारूपं सप्रयोजनपुनर्वचनमेव अनुवादः[5], 'घटो घटः'

---

1. द्रष्टव्य-ओदनं पचेदिति विधिवाक्यम्।
   अर्थवाद वाक्यम्-आयुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम्; तदेव; पृ०-562
2. .......समानार्थकसमानानुपूर्वीकशब्दप्रयोगः शब्दपुनरुक्तम्। समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानमर्थपुनरुक्तम्, आद्यं यथा-'घटो घट' इति, द्वितीयो यथा-''घटः कलश' इति। तदेव; पृ०-1188
3. पुनरुक्तं च प्रमत्तवाक्यमिति; तदेव, पृ० 549
4. नानुवादपुनरुक्त्योर्विशेषः शब्दास्याटोपपत्तेः; न्यायसूत्रम्:-II-1-66। तत्र न्यायभाष्ये-उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते चरितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति। न्यायभाष्यम्; पृ०-563
5. निष्प्रयोजनं पुनरभिधानं हि पुनरुक्तम्। अनुवादस्तु व्याख्यारूपः सप्रयोजनक इति भावः; न्यायभाष्ये विश्वनाथवृत्तिः, तदेव; पृ०-1188

इति शब्दपुनरुक्तस्थले द्वितीयघटशब्देन, घटः कलशः इति अर्थपुनरुक्तस्थले वा 'कलशः' इति शब्देन कस्यचित् विशेषार्थबोधस्याभावात् निष्प्रयोजनम् अप्रमाणञ्च। किन्तु 'पचतु पचतु' इत्यनुवादस्थले 'पचतु' इति शब्देन ममैव पाकं कर्तव्यम्-एवंविधबोधः जायते, किंवा, पाकक्रियाया अवच्छेदकत्वस्य शीघ्रत्वस्य वा बोधो भवति। पुनश्च ''शीघ्रं गम्यताम्' इति कथनादनन्तरं शीघ्रतरं गम्यताम् इत्यभिहिते पुनर्वचनं भवतीति नास्ति संशयः। किन्तु द्वितीयवाक्ये प्रयुक्ते न 'तरप्' प्रत्ययेन गमन कर्मण आतिशय्यरूपो विशेषार्थस्य बोधो जायते। [1] अतः तत सार्थकम्। एतादृशविशेषबोधो प्रथमोच्चारितेन शीघ्रं गम्यतामिति वाक्येन नैव संभवति, तस्मात् पुनः 'तरप्' प्रत्येन द्विरुक्तिः क्रियते। ईदृशी द्विरुक्तिरेव अनुवादः। एतत्तु सार्थकत्वात् प्रमाणमिति। 'त्रिःप्रथमामन्वाह.....' इति वैदिक वाक्यस्थले प्रथमोत्तमयो-स्त्रिरभिधानसत्वेऽपि पञ्चदशत्वविधानरूपं प्रयोजनवशात् तन्न निष्प्रयोजनं पुनरुक्तम्, अपि तु सप्रयोजनमनुवादमेव प्रमाणं वा।

केषाञ्चित् मते परप्रतिपादनार्थं वाक्यं प्रयुज्यते। पुनरुक्त्या श्रोता वाक्यार्थस्य सम्यक्ज्ञानं लभते; अनेन प्रकृतविषयस्य न कश्चित् बाधः हानिः वा जायते। अतः परप्रतिपादकेषु वाक्येषु पुनरुक्तं सार्थकमेव। किन्तु नैतद् समीचीनम्, यतः योऽर्थः पूर्वमेव प्रतिपाद्यते तस्य पुनः प्रतिपादनेन पुनरुक्तस्य वैयर्थ्यमेव साध्यते। परन्तु एतादृशवैयर्थ्यवशात् पुनरुक्तं निग्रहस्थानमेव। वाचस्पतिमिश्रमहोदयस्य मतानुसारेण वादी पुनरुक्ति प्रयोजने तत् प्रयोजनजिज्ञासायामेव आकुलचित्तः प्रतिवादी प्रथमोऽवारितवाक्यात् आपाततः प्रतीतार्थमेव अप्रतीतवत् अवबुद्ध्या निश्चित ज्ञानलाभे असमर्थो भवति, तदा वादी पुनश्च तस्यावबोधार्थं प्रबृत्तःसन् अपि तस्य पुनरुक्तं नार्थप्रतिपादकं भवति, अपितु विरुद्ध प्रयोजनवत्त्वरूपं वैयर्थ्यमेव सम्पादयति। अर्थात् पुनरुक्तं निग्रहस्थानमेव।[2]

---

1. .........शीघ्रं शीघ्रं गम्यतामित्यभ्यासात् क्रियातिशयप्रतीतेः सकृदुच्चरिताधानावगतेः क्रियातिशयस्य प्रयोजनवान् अभ्यासः।........। अवगतं तावच्छीघ्रं शीघ्रं गम्यतामित्यत्राम्यासातिशयप्रतीतेरनुवादस्य विशेषः; तदेव; पृ०-563-64।

2. तथाहि पुनरुक्तप्रयोगे तत्प्रयोजनानुसरणसमाकुलचित्तः प्रथमाभिधानादापाततः प्रतीतमप्यर्थमप्रतीतितमिव मन्यमानो न निश्चेतुमर्हति इति। ततश्च प्रतिपादनाय प्रवृत्तो न प्रतिपादयितेति विरुद्धप्रयोजनवत्त्ववैयर्थ्यं स्यादित्युपपन्नं निग्रहस्थानमिति। तदेव; पृ० 1188।

वैयाकरणास्तु 'नित्यवीप्सयोः' (पा० सू० 8-1-4) इति सूत्रेण नित्यार्थे वीप्सायाञ्च पदस्य द्विवचनं कुर्वन्ति, अत्र 'नित्य'-इति पदस्य मुख्यार्थः कुटस्थमिति तथा च अस्य गौणार्थः आभीक्ष्ण्यमिति। यद्यपि 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति परिभाषा-यद्यपि बलात् मुख्यस्य अर्थस्य ग्रहणं कर्त्तव्यं तथापि अत्र 'नित्य' इति शब्दस्य मुख्यार्थे लौकिक-प्रयोगाभावात् अभीष्टरूपः गौणार्थः ग्रहणीयम्[1] आभीक्ष्णं तु पौनःपुन्यम्, तत् क्रियानिष्ठो धर्मः। आभीक्ष्णग्रहणे तिङन्तेषु अव्ययसंज्ञककृदन्तेषु च पौनः पुन्यार्थे द्विर्वचनं विधीयते। यथा तिङन्ते-पचति पचति पाक कर्त्तुः अनवरतं पाकं हि अत्र बोद्धव्यम् अव्ययसंज्ञककृदन्ते यथा—भोजं भोजं ब्रजति इति। वीप्सा हि व्याप्तुमिच्छा व्याप्तिरत्र समग्रत्वं कात्स्न्र्य वा, सुबन्तपदानां द्विर्वचनविधानार्थं सूत्रे 'वीप्सा' इत्यस्य ग्रहणम्। यथा-वृक्षं वृक्षं सिञ्चति, अर्थात् तत्वाटिकास्थितवृक्षकात्स्न्र्यं अत्र अवुद्धयते। वृक्षं वृक्षमित्यादौ न बुहुवचनप्रसङ्गः। अपितु प्रत्येकवृक्षनिष्ठ एकत्वमेव अत्र भासत इति। अत्रतु सिंचनकर्त्ता सेचन क्रियया वाटिकास्थितान् सर्वान् वृक्षान् व्याप्तुमिच्छतीति वीप्सार्थः। अनुरूपभावेन ग्रामो ग्रामो रमणीयः इत्रापि बोद्धव्यम्, परि परित्रिवर्गेभ्यः' इति वाक्ये 'परि' इति शब्दस्य पुनर्वचनं विना वर्णनरूपस्य अर्थस्य बोधो नैव संभवति' 'अध्यधिकूडामि' इत्यत्रापि अधि-इति शब्दस्य द्विरभिधानेन सामीप्यरूपस्य अर्थस्य बोधो जायते। एवं प्रकारेण अर्थविशेषप्रकाशार्थं व्याकरणशास्त्रे द्विर्वचनं स्वीक्रियते।

❑

1. दृष्टव्यः-काशिकावृत्तौ पदमञ्जरी व्याख्या-'नित्यवीप्सयोः' इति सूत्रस्योपरि; भाग-6; वाराणसी।

# चारुचर्या में प्रतिपादित भारतीय संस्कृत विषयक सन्देश

**डा० तरुण कुमार शर्मा**, इलाहाबाद

ग्यारहवीं शताब्दी में काश्मीर में जन्मे आचार्य क्षेमेन्द्र एक ऐसे बहुआयामी कर्तृत्व के कवि हैं जिन्होंने विविध विधामयी शैली से युक्त अपनी लेखनी को साहित्य के विभिन्न क्षेत्रों में प्रयुक्त किया है। उन्होंने मूलतः छोटे-बड़े 40 काव्यों का सृजन किया है जिनमें 18 ग्रन्थ प्रकाशित हैं। उनके काव्य वस्तुतः तात्कालिक समाज के दर्पण के रूप में हैं। उन्होंने अपने साहित्य रूपी दर्पण में तात्कालिक समाज का जो प्रतिबिम्बन किया है वह आधुनिक युग तक के समाज को प्रभावित करता है। जिनकी रचनाओं का मुख्य उद्देश्य सुधी जनों को आनन्द प्रदान करने के साथ साथ जनता का नैतिक उत्थान एवं चरित्र का निर्माण करना है। उन्होंने अपने काव्यों में समकालिक समाज में प्रसृत कुरीतियों शोषणों एवं अनाचारों आदि का यथार्थ चित्रण किया है।

आचार्य क्षेमेन्द्र का लघुकाव्य 'चारुचर्या' एक ऐसी रचना है जिसमें नित्यक्रियात्मक, लोकव्यवहारात्मक, भक्ति, ज्ञान, इत्यादि एवं भारतीय संस्कृति सम्बन्धी नीतियों एवं उपदेशों का समन्वय है। उन्होंने नित्यक्रियात्मक, लोकव्यवहारात्मक, ज्ञान, भक्ति, एवं पुरुषर्थ आदि वैशिष्ट्यों को प्रकट कर भारतीय समाज के लिए उपदेष्टा का कार्य किया है जो प्रासंगिक समाज को प्रभावित करने में पूर्णतः सक्षम है। क्षेमेन्द्र की 'चारुचर्या' में भारतीय संस्कृति के आदर्शों पर प्रकाश डालने का उपक्रम किया गया है। संस्कृति मानव जीवन की गौरवमयी मर्यादा व स्वतन्त्रता की वास्तविक प्रतिष्ठा है। यह ऐसी बहती हुई धारा है जिसमें सदैव कुछ न कुछ नवीन जुड़ता रहता है एवं कुछ न कुछ विलुप्त होता रहता है। परन्तु भारतीय संस्कृति के कुछ ऐसे शाश्वत आदर्श भी हैं जो जीवलोक की यात्रा को मंगलमय बनाने के लिए अपरिहार्य हैं। आचार्य क्षेमेन्द्र की 'चारुचर्या' में विहित भारतीय

संस्कृति के ऐसे ही शाश्वत मूल्यों का विवेचन किया गया हैं–

## (1) पुरुषार्थ चतुष्टय का सन्देश

भारतीय संस्कृति धर्म, अर्थ, काम एवं मोक्ष पुरुषार्थ चतुष्टय से प्राणवती हैं। चाहे राजा महाराजा हों या योगी, चाहे साधारण जन जीवन के व्यक्ति सभी को अपने जीवन का पुनीत मन्तव्य निर्धारण करने के लिए लोक-जीवन-यात्रा को मंगलमय बनाने के लिए पुरुषार्थत्रय को पाथेय के रूप में लेकर चलना पड़ता है। आचार्य क्षेमेन्द्र ने भारतीय संस्कृति के सन्देश में पुरुषार्थत्रय का अपनी विशिष्ट शैली में प्रतिपादन किया है–

**साधयेत धर्मकामार्थान् परस्परमबाधकान्।**

**त्रिवर्गसोधना भूपाः बभूवुः सगरादयः।।[1]**

यहाँ आचार्य ने सम्राट् सागर की जीवलोक यात्रा का उल्लेख करके धर्मार्थकामादि की साधना की और संकेत किया है।

जहाँ एक ओर धर्म की साधना का उल्लेख करते हुए उन्होंने कहा है कि कष्ट पड़ने पर भी मानव को धर्म की मर्यादा का परित्याग नहीं करना चाहिए। यथा सत्य हरिश्चन्द्र ने चाण्डाल की शरण को स्वीकार कर लिया था। परन्तु धर्म नहीं छोड़ा था। वहीं दूसरी ओर गुणोपेत अर्थार्जन की ओर संकेत करते हुए कवियों ने उदाहरण दिया कि राक्षसों को त्याग कर गुणाश्रित देवों के पास ही लक्ष्मी ने आश्रय ग्रहण किया–

- **न त्यजेत् धर्ममर्यादामपि क्लेशदशां श्रितः।**

**हरिश्चन्द्रो हि धर्मार्थी सेहे चण्डालदासताम्।।[2]**

आचार्य क्षेमेन्द्र ने जहाँ एक ओर काम का उल्लेख करते हुए परदारेच्छा न करने का निर्देश दिया तथा रावण द्वारा सीता के परिणाम का उदाहरण भी दिया। वहीं दूसरी ओर

---

1. चारुचर्या, श्लोक 69
2. चारुचार्य, श्लोक 13

आचार्य ने मोक्ष की ओर उन्मुख होने के लिए राग सुख भोग में भी जनक के समान विरक्तधी होने का निर्देश दिया।

**न कुर्यात् परदारेच्छां विश्वासं स्त्रीषु वर्जयेत्।**

**हतो दशास्यः सीतार्थे हतः पत्न्या विदूरथः ।।[1]**

इस प्रकार 'चारुचर्याशतक' में पुरुषार्थ चतुष्टय का निर्देश देकर आचार्य क्षेमेन्द्र ने भारतीय संस्कृति के मोक्ष मार्ग का आदर्श सन्देश प्रदान किया है।

## (2) नित्य क्रियात्मक सन्देश

भारतीय संस्कृति में नित्यनैमित्तक क्रियाओं का अपना विशिष्ट महत्त्व है मानव जीवन-यात्रा के साफल्य के लिए मानसी कियाओं के साथ शरीरिक क्रियाओं की पावनता भी अपरिहार्य होती है। 'चारुचर्याशतक' में नित्य कर्म की शारीरिक क्रियाओं का उल्लेख स्थान स्थान पर मिलता है। प्रातः जागरण स्नानादि से कलेवर का पावनत्व तथा चरण प्रक्षालन आदि का नित्य कर्म में पावनत्व प्रतिपादित किया गया है। अर्थानतरन्यास शैली में कवि ने अपनी अपनी विचारणा को कितने सहज भाव से अभिव्यक्त किया है, दष्टव्य है–

**जपहोमार्चनं कुर्यात् सुधौतचरणः शुचिः।**

**पादशौचविहीनं हि प्रविवेश नलं कलिः ।।[2]**

तात्पर्य यह है कि चरण प्रक्षालन न करने के कारण नल के कलेवर में कलि के प्रवेश का उल्लेख करते हुए कवि ने नित्य कर्म में शारीरिक पवित्रता की महत्ता प्रतिपादित की है।

आचार्य क्षेमेन्द्र ने प्रातः भगवान् महेश्वर की पूजा किये बिना कोई कार्य न करने का सन्देश दिया है साथ ही उदाहरण रूप में उसकी पुष्टि भी की है–

---

1. चारुचर्या, श्लोक 10.
2. चारुचर्या, श्लोक 8.

**न कुर्वीत क्रियां कांचिदनभ्यर्च्य महेश्वरम्।**

**ईशार्चनरतं श्वेतं नाभून्नेतुं यमः क्षमः ।।[1]**

## ( 3 ) भक्ति-ज्ञान-त्यागादि का सन्देश–

भारतीय संस्कृति आध्यात्मिकतापरक है उसमें जहाँ एक ओर लोकवयवहार, आचार-विचार, संस्कारादि की स्थापना की गयी है, वहीं दूसरी ओर नैतिकता, न्याय, भक्ति, ज्ञान, त्यागादि आदर्शों की भी महत्ता है जिसमें आध्यात्मिकता का प्राधान्य है।

आचार्य क्षेमेन्द्र पूर्व में शिव भक्त थे परन्तु बाद में उन्होंने वैष्णव धर्म अपना लिया था। अतः अपने 'चारुचर्याशतक' के 99 वें अनुष्टप्छन्द में 'मानव को अन्त में विष्णु के नाम का स्मरण करना चाहिए।' उन्होंने ऐसा सन्देश प्रदान किया है। अपनी अर्थान्तरन्यास परक शैली में उदाहरण देकर उन्होंने स्पष्ट भी किया है कि अन्त में शरशैय्यापर पडे महारथी भीष्म ने भी विष्णु का स्मरण किया था–

**अन्ते संतोषदं विष्णुं स्मरेद्धन्तारमापदाम्।**

**शरतल्पगतो भीष्मः सस्मार गरुडध्वजम्।।[2]**

अन्त में विष्णु का नामोच्चारण करने से जीव को मुक्ति होती है, भारतीय संस्कृति के आध्यात्मिक जगत् में यह अवधारणा है। कवि ने इसी की ओर संकेत किया है।

गुरु की आराधना भक्तिपूर्वक करनी चाहिए क्योंकि आराधना से प्रसन्न होकर विश्वामित्र ने राम को अस्त्रमण्डल प्रदान किया था। ऐसा चारुचर्या में उल्लिखित है। मुक्तिमार्ग में गुरु की अनिवार्यता सम्पूर्ण भारतीय धर्मों में प्रतिपादित की गयी है–

**गुरुमाराधयेत् भक्त्या विद्या विनयसाधनम्।**

**रामाय प्रददौ तुष्टो विश्वामित्रोऽस्त्रमण्डलम्।।[3]**

---

1. चारुचर्या, श्लोक 4
2. चारुचर्या, श्लोक 99.
3. चारुचर्या श्लोक 67.

## अथ पञ्चमस्तरङ्गः

अथान्तर्यजनं वक्ष्ये क्रमशो ध्यानधारिणाम्।

भुक्तिमुक्तिप्रदं साक्षान्महापातकनाशनम्॥ 1॥

शरीरं परं भावयेद् विश्वरूपं ततो हृत्समीपेऽम्बुधिं धीरचेताः।

सुधापूर्णमेवाथवा क्षीरपूर्णं मणिद्वीपमेकं तदन्तं प्रदीप्तम्॥ 2॥

सुवर्णैर्लसत् बालुकाभिः प्रपूर्णं समन्तात् परं योजनं लक्ष्यसभ्यम्।

चतुर्दिक्षु तस्याद्भुतोद्यानमास्ते सुरम्यं प्रपूर्णैः प्रपूर्णं मनोज्ञैः॥ 3॥

सुवृक्षैः फलाढ्यैर्वरैश्चम्पकाद्यैः कदम्बैर्लवङ्गैस्तथा पारिजातैः।

लसन्मल्लिका-मालतीनागराजैः समुद्भासितं षट्पदैर्दीप्यमानम्॥ 4॥

वरैः कोकिलैर्गीयमानं सुरङ्गैः शुकैः खञ्जरीटादिभिः सारसैश्च।

मयूरादिभिः पक्षिभिर्भासमानं सुगन्धानिलैः शीतलैश्चाति रम्यम्॥ 5॥

प्रसन्ना मृगेन्द्रादयो जन्तवश्चापरे हंसकाः संवहन्तीह तत्र।

ततो वेदवापी सुरम्याम्बुजाद्यैश्चतुर्दिक्षुहंसादिभिश्चक्रवाकैः॥ 6॥

ततो द्वीपमध्ये परं भावयेद् वै मुनीन्द्रोऽच्युतक्रोशभित्तं सुरम्यम्।

चतुर्द्वारयुक्तं लसच्चामराद्यैश्चलद्दृष्टिकायोरवारैः प्रपूर्णम्॥ 7॥

ध्यायेत् स्वर्णसुवेदिकां मणिमयीं प्राचीरमध्ये ततो

नित्यं कल्पतरुं हिमद्युतिनिभं पञ्चाशदर्णात्मकम्।

ज्योतिर्मन्दिरमुत्तमं यतिवरश्चन्द्रातपैः शोभितं

विस्तीर्णं शतयोजनैर्मणिमयं कल्पद्रुमस्यान्तके॥ 8॥

पश्चाद् वा मणिवेदिकोपरि लसत् सिंहासनं भावयेत्

तत्राब्जोपरि दैवतं दिनकरद्योतं परं भावयेत्।

यन्त्रं निर्मलचेतसामृतरसैः पूर्णं परानन्दवित्

ध्यात्वा द्वारचतुष्टये सुविधिना द्वारस्य देवान् यजेत्॥ 9॥

भक्त्या त्वासनदेवता सुविधिना धीरो यजेद् योगवित्
पश्चात् श्रीगुरुदेवतोक्ति-सुलभामावाह्यतां देवताम्।
यन्त्रे वै परिपूजयेत् सितमनास्तेजस्वरूपां परां
पाद्याद्यैरुपचारकैर्मनसिजैर्दिव्यैर्यतान्तर्मना: ॥ 10 ॥
पाद्यञ्चैव पदाम्बुजे हि विमलञ्चार्घ्यन्तु मौलौ तथा
वक्त्रे चैव परं जलं सुविमलं दद्याच्च यत्नाद् बुधः।
पश्चाद् वै मधुपर्ककं यतिवरो गन्धञ्च वाय्वात्मकं
कस्तूरीहरिचन्दनं सुकुसुमं माल्यानुलेपं तथा ॥ 11 ॥
पञ्चवाय्वात्मकं धूपं चिदग्निं दीपमेव च।
अनाहतध्वनिमयीं घण्टाञ्चैव निवेदयेत् ॥ 12 ॥
नैवेद्यं विविधं दद्यात् पायसं पिष्टकान्वितम्।
शर्करां समधुक्षीरं फलानि विविधानि च ॥ 13 ॥
पृथिव्यां यानि वस्तूनि बहूनि चोत्तमानि च।
देवतायै प्रदद्याच्च भक्तिभावेन चेतसा ॥ 14 ॥
सहस्रा वामृतेनैव भृङ्गारं परिपूरितम्।
दद्यान्नीरं हि पानाय ताम्बूलं तत्त्वमेव हि ॥ 15 ॥
अम्बरं चामरं दद्याद् दर्पणं सूर्पमेव च।
पूर्णचन्द्रं तथाच्छत्रं मेखलां पद्मनिर्मिताम् ॥ 16 ॥
ततो मालां चन्दनञ्च दत्वा नत्वा स्वभक्तितः।
देवतायाः षडङ्गादीन् स्नानं संपूज्य कारयेत् ॥ 17 ॥
अथोद्वर्त्तनं देवतायाश्च कृत्वा सुवर्णस्य वै दोलिकायाञ्च नीत्वा।
ततः पश्चिमे मण्डपस्यापि तोयैः समारोप्यतामासने स्नापयेच्च ॥ 18 ॥
ततः प्रोञ्छयेत् केशपाशं सुरम्यं मनोहारि गन्धादिकं संप्रदाय।
परं[1] गन्धयेत् केशपाशं प्रयत्नात् सुपुष्पाद्यमालादिभिः शान्तचेताः ॥ 19 ॥

---

1. वरं इत्यपपाठः।

आकाशतत्त्वैः श्रवणं हि धीमान् तत्त्वेन नेत्रं खलु तैजसञ्च[1]।
वायोस्तथा घ्राण-कलात्मनो वै चोद्धर्वं हि मध्यं त्वयि विद्यया च॥ 20॥
अधस्तथा वै शिवतत्त्वकेन संप्रोञ्छयेन्मानसरम्यवस्त्रैः।
दद्यात् ततो वै मणिपादुकाञ्च पादद्वयाधः परया च भक्त्या॥ 21॥
वस्त्रं तां परिधापयेद्यतमना दिव्यं सुवर्णात्मकं
भाले चन्दनमुत्तमं नयनके दद्यात् पुनः कज्जलम्।
ताटङ्कं वलयां मनोगतलसन्मालां गले दापये-
दङ्घ्रावुत्तमनूपुरौ श्रवणयोर्मुक्तावतंसोत्तमौ॥ 22॥
देव्याः भालतले परं सुविमलं सिन्दूरमेवारुणं
गन्धं लोहितचन्दनं पदयुगेऽलक्तन्तु दद्याद् बुधः।
नासायां गजमौक्तिकं तु मनसा दद्यादलङ्कारकं
शीर्षे रत्नपरीतमेव मुकुटं कोट्यर्कविद्युन्निभम्॥ 23॥
तुष्येऽलक्तकमुत्तमं हि वपुषि स्वानन्दगन्धं ततो
दिव्यां कञ्चुलिकां तथा हृदि पुनर्गन्धोत्कटं कुङ्कुमम्।
शङ्खञ्चैव मनोरमं प्रतिकरं दिव्यास्त्रभूषादिकं
केयूरान्मणिकिङ्किणीकटितटे क्षुद्राख्यघण्टावलिम्॥ 24॥
पादयोः नूपुरौ दद्यात्तथैवान्यच्च भूषणम्।
अङ्गुरीयकरत्नानि सर्वाङ्गुलिषु दापयेत्॥ 25॥
समुत्थाप्य तां देवतां दोलिकायां बुधो देवकन्यागणैरप्सरोभिः।
समुद्वीज्यमानां परां चामराद्यैः समानीय पूर्वासने स्थापयेच्च॥ 26॥
विविधविमलपुष्पैर्गन्धपुष्पादिदीव्यै-
र्बहुविधफलरम्यापूर्वनैवेद्यवृन्दैः।
घृतमधुपरमान्नैः पिष्टकाद्यैश्च तोयै-
र्नियतमपि यजेत्तां देवतां भक्तिभावात्॥27॥

---

1. ञ्च इत्यपपाठः।

अरुणकमलपुष्पैः पद्ममाल्यैर्मनोभि-

यर्जतीह यदि प[1]रमानन्दसन्दोहचित्तः।

बहुविधफलरम्यापूर्वनैवेद्यदिव्यैः

स भवति जनपूज्यो योगिराट् सर्वलोके ॥ 28 ॥

पशुपतिरिव सिद्धेर्नायकः शास्त्रवेत्ता

रचयति कवितालिं भारतीवा[2]परा सः।

न हि पुनरपरं वा जन्मपञ्चत्वभीति-

र्मदनसदृशमूर्त्तिस्तस्य वश्या रमा हि ॥ 29 ॥

अथोत्थाप्य धीरः परां कुण्डलीं तां शिवा-ब्रह्मरन्ध्रान्तकं सूक्ष्मरूपाम्।

अकारादिलान्तां विलोमञ्च जप्त्वा मनुञ्चाष्टवर्गैर्जपेदष्टवारम् ॥ 30 ॥

अथवा ब्रह्मरन्ध्रान्तरबलाकोणमण्डिताम्।

ग्रथितां कुण्डलीं ध्यात्वा जपेद् योगविशारदः ॥ 31 ॥

पूर्ववद्धोममेवञ्च तर्पणं पूर्ववच्चरेत्।

प्रणमेत् परया भक्त्या प्रादक्षिण्यविभागतः ॥ 32 ॥

ततो नृत्यगीतैः पुनस्तोषयित्वा परां देवतां दिव्यभावेन धीरः।

समानीयतां वेदिकां पूर्वपार्श्वे परे रत्नपर्यङ्कके ब्रह्मरूपाम् ॥ 33 ॥

शयनं कारयेत्तत्र पर्यङ्के परदेवताम्।

चामरैः पवनं कुर्यात् दद्यात्ताम्बूलमुत्तमम् ॥ 34 ॥

देवकन्यागणैः सार्द्धं नृत्यगीतादिभिः पराम्।

तोषयेद् भावपुष्पेण पूजयेद् योगनायकः ॥ 35 ॥

सुविमलजलपूर्णमूर्णश्रृङ्गारकाभि-

र्विलुलितचमराद्यैः स्वर्नदीसीकराद्यैः।

सुरवरयुवतीभिः सेव्यमानां नरस्तां

यजति यदि च भक्त्या मानसैर्देवतुल्यः ॥ 36 ॥

---

1. न्वैवा, इत्यपाठः।
2. वो० इत्यपपाठः।

**स भवति सुरपूज्यः सर्वलोकेषु धन्यः**

**शिव इव रमतेऽसौ मानसैरर्चयेद्यः।**

**मदनसदृशमूर्त्तिः सर्वशास्त्रस्य वेत्ता**

**किमधिकमपि चान्ते ब्रह्मनिर्वाणमेति॥ 37॥**

*इतिश्रीमद्हरिहरानन्दब्रह्मचार्य्यग्रणी-परमहंसश्रीचरणसरोजशिष्य-महामहोपाध्यायश्रीमद्-वीरेश्वरान्दब्रह्मचारिविरचिते'योगरत्नाकरे' पञ्चमस्तरङ्गः॥*



## अथ षष्ठस्तरङ्गः

आदौ मायात्मकाम्भो-जगदखिलमिदं नित्यमासीसितेज-

स्तस्यान्तर्लिङ्गरूपीसकलशिववरोज्योतिरूपो हि सूक्ष्मः।

शुद्धज्ञान-प्रकाशः परमरसचयः शीतलाभः पुराणो

नित्यानन्ददाभिधानस्[1]त्रिमुवनरहितो नित्यचैतन्यरूपः॥ 1॥

तस्माच्छक्तिरपूर्वनिर्मलमहो योनिस्वरूपोऽभव-

[2]न्नादोऽभूदमलस्ततो हिमकरद्योतः सदानन्दकः।

बिन्दुश्चैव ततोऽभवत् क्रमवशाद् बीजं हि शक्तिस्वयं

नादोऽसावुभयात्मकः खलु महान् बिन्दुश्च लिङ्गात्मकः॥ 2॥

रौद्री बिन्दुसमुद्भवा हि तमसो ज्योष्ठा तु नादात्ततो

वामा बीजगता हि तस्य रजसः सत्त्वस्य चेच्छा क्रिया।

शक्तिर्ज्ञानसपूर्विका क्रमवशात्ताभ्योऽपि रूद्रादय-

स्तस्माद् बिन्दुमयात्सदा शिववरो जातास्तु चेशादयः॥ 3॥

पराब्रह्मण एव [ ०० ] बिन्दोर्दिङ्कालभूता अमराश्च मन्द्राः।

ग्रहास्तथा रात्रि-दिनानि लोकास्तथाऽभवन् शास्त्रचयाः धराद्याः।। 4॥

परा हि बिन्दोः परिभिद्यमानाद् रवीन्दुवैश्वानररूपिणस्तु

वरोऽभवन्नित्यमहत्स्वरूपी सचेतना तं भुजगी प्रणम्या॥ 5॥

शब्दब्रह्मवरो हि पूर्णविभवो नित्योऽमरैर्गीयते

केचिज्ज्योतिवशादितत्त्वमपरेकेचित्तु सा चिन्मयी।

---

1. ना० इत्यपपाठः।
2. ठ दा० इत्यपपाठः।

**अस्माकं तु मतावलम्बनपरा धीरः परो योगिनो**

**गृह्णन्ति श्रुतयः प्रकृत्यनुगतः चैतन्यशब्दात्मकम्॥ 6 ॥**

**संक्षेपात् कथितं चैतत् विश्वोत्पत्तिनिरूपणम्।**

**अथान्यक्रमशाश्चाहं वक्ष्यामि शास्त्रसम्मतम्॥ 7 ॥**

इतिश्रीमद्हरिहरानन्दब्रह्मचार्य्यग्रणी-परमहंसश्रीचरणसरोजशिष्यमहामहोपाध्याय-श्रीमद्वीरेश्वरानन्दब्रह्मचारिविरचिते 'योगरत्नाकरे' षष्ठस्तरङ्गः॥



## ॥ अथ सप्तमस्तरङ्गः ॥

शरीरं स्वकीयाब्धिहस्तप्रमीतं वितस्थिप्रमीतः शरीराब्धिजीवः।
समास्तेऽधिको वायुरेवात्र नित्यं त्वपानो गुदार्द्धेऽम्बुजान्ते प्रकाशः॥ 1 ॥
समानः समास्ते सदा भान्तेऽप्युदानः स कण्ठे वसेद् व्यापके [ सूक्ष्मके[1] ऽ ] सौ।
ततो ध्यानवायुर्वसेत् सर्वदेहे ततः पञ्चवाय्वादिकाः [ सर्व ] नागाः ॥ 2 ॥
वसन्तीह नागादयः पञ्चदेवाः समुद्गीरणे नागनामा च वायुः।
तथोन्मीलने कूर्मसंज्ञः कृकश्च क्षुते जृम्भणे देवदत्तोऽमृतोऽपि ॥ 3 ॥
वपुर्व्यापकोऽसौ [ पुनः ] प्रागजयश्च समास्ते हि नाडीपथेष्वात्मदेहे।
भ्रमन्तीह जीवस्वरूपाः सदैते नराणां तथा जन्तवश्चैव नित्यम् ॥ 4 ॥

बध्वैकासनमेव मारुतमथो वै कुम्भकं योगवित्
कृत्वाङ्गुष्ठयुगं बुधो दृढतरं श्रोत्रे विनिःक्षिप्य च।
नेत्रे तर्जनिके हि मध्ययुगलां घ्राणेऽङ्गुली वक्त्रके
ध्यायेन्निर्मलचेतसाऽनिलसमं जीवञ्च हंसेन हि ॥ 5 ॥
नादश्चैव तु जायते प्रथमतो मत्तालिमालाध्वनि-
श्चाभ्यासाद् वरवंशिकाध्वनिरवः कांस्यानि घण्टा ध्वनिः।
पश्चान्मेघवरध्वनिः प्रभवति प्राभ्यासतो वै नवः
[ लोके[2] ] नैव तु लिप्यतेऽमरवरस्तुल्यो न पापैः पुनः ॥ 6 ॥
सदाभ्यासतो वै नरो मृत्युभीतेरतीतः स मोहान्धकारे हि हंसः।
न रोगः शरीरे सदा योगिनोऽपि तथा प्रेतराजस्य भीतिर्न तस्य ॥ 7 ॥
ततः पूर्णिमादिक्रमे दक्षनासापुटे त्रैदिनं व्याप्य वायोर्गतिः स्यात्।
ततस्त्रीनिरासे दिनान्येव नित्यं भवेद्यावदन्या क्रमात् पौर्णमासी ॥ 8 ॥

---

1. मूलमातृकायां वर्णाभावस्तस्मान्मया यथामतिः प्रपूरितः।
2. संसारेः इति मूलपाठादत्र छन्दोभङ्गः।

यदा व्यत्ययेनानिलस्यापि रोगो गतिर्नासिकायां तिथेः स्याच्च देहे।
भवेच्चेद्यदैकस्य पक्षस्य वायो तदा स्याच्च देहे तु रोगानि भूतिः ॥ 9 ॥
पक्षत्रयाणां विपरीतकेन मृत्युर्भवेद् वै गदितं हि सत्यम्।
ब्रह्मा च विष्णु र्न च भूतनाथो रक्षां समर्थो न च कर्तुमीशः ॥ 10 ॥
उपायमेवाथ वक्ष्ये नाराणां जीवेच्चिरं कालमेवाहि-गोप्यम्।
न पीड्य वायुं क्रमशः प्रपूर्य सौषुम्णगर्भे परिकुम्भयेत्ताम् ॥ 11 ॥
संरेचयेत्तं क्रमशः प्रपूर्यानिलं ततोज्ञः परिकुम्भयित्वा।
संरेचयेद्देव पुनः पुनः स्यात् क्रमेण वायोर्गतिरेव यावत् ॥ 12 ॥
न मृत्युर्भवेद् विक्रमादभ्यसेद्यः सुषुम्णोदरे ध्यानयोगाच्च वायुम्।
न रोगः शरीरे भवेत्तस्य कश्चित् त्रिलोकप्रदर्शी महादेवतुल्यः ॥ 13 ॥

अथान्यत्तालुमूले च धीरो जिह्वां नियोजयेत्।
पीत्वाऽमृतरसं योगी चिरजीवी भवेद् ध्रुवम् ॥ 14 ॥

योऽभ्यासं कुरुते बुधः प्रतिदिनं योगं यतान्तर्मना
ज्ञात्वा सत्कृतपुस्तके गुरुमुखाद् योगस्य रत्नाकरे।
स स्यादीश्वर एव भगवान् रक्षा-विनाशक्षमो
हस्तेऽष्टौ विलसन्ति सिद्धिनिवहास्तस्यापि शम्भोःसदा ॥ 15 ॥

योगरत्नाकरो ग्रन्थ[1]ः सारात् साररनिरूपितः।
ज्ञात्वा योगीभवेदेव शिव एव न संशयः ॥ 16 ॥
अभ्यासाज्जायते वक्त्रे वाणी वाचस्पतेरिव।
पाण्डित्यं सर्वशास्त्रेषु चान्ते निर्वाणमाप्नुयात् ॥ 17 ॥

न दद्यादियं वै विपक्षाश्रितायाप्यतिक्रोधिने धूर्त्तकायातिगोप्यम्।
अयोग्याय दत्वा भवेत् सिद्धिहानिस्तथारोगयुक्तोऽप[2]जीवी स मूर्खः ॥ 18 ॥
योग्याय दधादपि शिष्यकाय प्रज्ञायुताय प्रयताय धीरः।
भक्ताय चैषं महते हि दत्वा स स्याद विमुक्तः खलु पातकेभ्यः ॥ 19 ॥

---

1. करं ग्रन्थम्, इत्यपपाठः।
2. ऽपि, इत्ययपाठ।ः

**यश्चैवं प्रतिवासरं पठति वा ध्यानैः परं चाभ्यसेत्**

**स स्याद्योगविशारदः कविवरः शास्त्रेषु वागीश्वरः।**

**वश्या तस्य रमा परे परपुरे गन्तुं क्षमो योगवित्**

**अन्ते यात्यमलं परं यतिवरो निवार्णमेवाव्ययम्॥ 20॥**

**अभ्यासाद् भवतीह सिद्धिरतुला ध्यानाद्धि योगीश्वरः**

**संपाठात् कवितालिरेव विमला संपाठ्यते येन वै।**

**तस्याष्टौ परिसिद्धयः करतले नित्यं भवेन्मुक्तिमान्**

**पापान्मोक्ष–विमानमेति नितरां निर्वाणमेवाच्युतम्॥ 12॥**

*इतिश्रीमद्हरिहरानन्दब्रह्मचार्य्यग्रणी–परमहंसश्रीचरणसरोजशिष्य–महामहोपाध्याय–श्रीमद्वीरेश्वरानन्दब्रह्मचारिविरचिते 'योगरत्नाकरे' सप्तमस्तरङ्ग॥ समाप्तश्चायं ग्रन्थः॥*

